पूजां चकार भक्त्या च नैवेद्यैर्विविधैरपि । धूपैर्दीपैश्च गन्धैश्च पुष्पैश्च तुलसीं विना ॥२॥
सम्पूज्य भ्रातरं भक्त्या स रामः शंकराज्ञया । गुरुपत्नीं गुरुं नत्वा गमनं कर्तुमुद्यतः ॥३॥
नारद उवाच ॥
पूजां भगवतश्चक्रे रामो गणपतेर्यदा । नैवद्यैर्विविधैः पुष्पैस्तुलसीं च विना कथम् ॥४॥
तुलसी सर्वपुष्पाणां मान्या धन्या मनोहरा । कथं पूतां सारभूतां न गृह्णाति गणेश्वरः ॥५॥
नारायण उवाच ॥
शृणु नारद वक्ष्येऽहमितिहासं पुरातनम् । ब्रह्मकल्पस्य वृत्तान्तं निगूढं च मनोहरम् ॥६॥
एकदा तुलसी देवी प्रोद्भिन्नवयौवना । तीर्थं भ्रमन्ती तपसा नारायणपरायणा ॥७॥
ददर्श गङ्गातीरे सा गणेशं यौवनान्वितम् । अतीव सुन्दरं शुद्धं सस्मितं पीतवाससम् ॥८॥
चन्दनोक्षितसर्वाङ्गं रत्नभूषणभूषितम् । ध्यायन्तं कृष्णपादाब्जं जन्ममृत्युजरापहम् ॥९॥
जितेन्द्रियाणां प्रवरं योगीन्द्राणां गुरोर्गुरुम् । सुरूपहार्य्यं निष्कामं सकामा तमुवाच ह ॥१०॥
तुलस्युवाच ॥
अहो ध्यायसि किं देव शान्तरूप गजानन । कथं लम्बोदरो देहो गजवक्त्रं कथं तव ॥११॥
एकदन्तः कथं वक्त्रे वदामुत्र च कारणम् । त्यज ध्यानं महाभाग सायंकाल उपस्थितः ॥१२॥
इत्युक्त्वा तुलसी देवी प्रजहास पुनः पुनः । परं चेतसि दग्धा सा कामबाणैः सुदारुणैः ॥१३॥
गणेशस्य प्रधानाङ्गे दत्त्वा किञ्चिज्जलं मुने । जघान तर्जन्यग्रेण निष्पन्दं कृष्णमानसम् ॥१४॥
बभूव ध्यानभग्नं च तस्य नारद चेतनम् । दुःखं च ध्यानभेदेन तद्विच्छेदो हि शोकदः ॥१५॥
ध्यानं त्यक्त्वा हरिं स्मृत्वा चापश्यत्कामिनीं पुरः । नवयौवनसम्पन्नां सस्मितां कामपीडिताम् ॥१६॥
लम्बोदरश्च तां दृष्ट्वा परं विनयपूर्वकम् । उवाच सस्मितः शान्तः शान्तां कामातुरां वशी ॥१७॥
गणेश्वर उवाच ॥
का त्वं वत्से कस्य कन्या मातर्मां ब्रूहि किं शुभे । पापदोऽशुभदः शश्वद्ध्यानभङ्गस्तपस्विनाम् ॥१८॥
कृष्णः करोतु कल्याणं हन्तु विघ्नं कृपानिधिः । तद्ध्यानभङ्गजाद्दोषान्नाशुभं स्यात्तु ते शुभे ॥१९॥
गणेशवचनं श्रुत्वा तमुवाच स्मरातुरा । सस्मितं सकटाक्षं च देवं मधुरया गिरा ॥२०॥
तुलस्युवाच ॥
धर्मात्मजस्य कन्याऽहमप्रौढा च तपस्विनी । तपस्या मे स्वामिनोऽर्थे त्वं स्वामी भव मे प्रभो ॥२१॥
तुलसीवचनं श्रुत्वा गणेशः श्रीहरिं स्मरन् । तामुवाच महाप्राज्ञः प्राज्ञीं मधुरया गिरा ॥२२॥
गणेश उवाच ॥
हे मातर्नास्ति मे वाञ्छा घोरे दारपरिग्रहे । दारग्रहो हि दुःखाय न सुखाय कदाचन ॥२३॥
हरिभक्तेर्व्यवायश्च तपस्यानाशकारकः । मोक्षद्वारकपाटश्च भवबन्धनपाशकः ॥२४॥
गर्भवासकरः शश्वत्तत्त्वज्ञाननिकृन्तकः । संशयानां समारम्भो यस्त्याज्यो वृषलैरपि ॥२५॥
गेहोऽहंकरणानां च सर्वमायाकरण्डकम् । साहसानां समूहश्च दोषाणां च विशेषतः ॥२६॥
निवर्तस्व महाभागे पश्यान्यं कामुकं पतिम् । कामुकेनैव कामुक्याः संगमो गुणवान्भवेत् ॥२७॥
इत्येवं वचनं श्रुत्वा कोपात्सा तं शशाप ह । दारास्ते भविताऽसाध्वी गणेश्वर न संशयः ॥२८॥
इत्याकर्ण्य सुरश्रेष्ठस्तां शशाप शिवात्मजः । देवि त्वमसुरग्रस्ता भविष्यसि न संशयः ॥२९॥
तत्पश्चान्महतां शापाद्वृक्षस्त्वं भवितेति च । महातपस्वीत्युक्त्वा तां विरराम च नारद ॥३०॥
शापं श्रुत्वा तु तुलसी सा रुरोद पुनः पुनः । तुष्टाव च सुरश्रेष्ठं स प्रसन्न उवाच ताम् ॥३१॥
गणेश्वर उवाच ॥
पुष्पाणां सारभूता त्वं भविष्यसि मनोरमे । कलांशेन महाभागे स्वयं नारायणप्रिया ॥३२॥
प्रिया त्वं सर्वदेवानां श्रीकृष्णस्य विशेषतः । पूजा विमुक्तिदा नृणां मया भोग्या न नित्यशः ॥३३॥
इत्युक्त्वा तां सुरश्रेष्ठो जगाम तपसे पुनः । हरेराराधनव्यग्रो बदरीसन्निधिं ययौ ॥३४॥
जगाम तुलसी देवी हृदयेन विदूयता । निराहारा तपश्चक्रे पुष्करे लक्षवर्षकम् ॥३५॥
पश्चान्मुनीन्द्रशापेन गणेशस्य च नारद । सा प्रिया शङ्खचूडस्य बभूव सुचिरं मुने ॥३६॥
ततः शङ्करशूलेन स ममारासुरेश्वरः । सा कलांशेन वृक्षत्वं ययौ नारायणप्रिया ॥३७॥
कथितश्चेतिहासस्ते श्रुतो धर्ममुखात्पुरा । मोक्षप्रदश्च सारश्च पुराणेन प्रकीर्तितः ॥३८॥
ततः परशुरामोऽसौ जगाम तपसे वनम् । प्रणम्य शङ्करं दुर्गां संपूज्य च गणेश्वरम् ॥३९॥
पूजितो वन्दितः सर्वैः सुरेन्द्रमुनिपुङ्गवैः । पार्वतीशिवसान्निध्ये सुखं तस्थौ गणेश्वरः ॥४०॥
इदं गणपतेः खण्डं यः शृणोति समाहितः । स राजसूययज्ञस्य फलमाप्नोति निश्चितम् ॥४१॥
अपुत्रो लभते पुत्रं श्रीगणेशप्रसादतः । धीरं वीरं च धनिनं गुणिनं चिरजीविनम् ॥४२॥

यशस्विनं पुत्रिणं च विद्वांसं सुकवीश्वरम् । जितेन्द्रियाणां प्रवरं दातारं सर्वसम्पदाम् ॥४३॥
सुशीलं च सदाचारं प्रशंस्यं वैष्णवं लभेत् । अहिंसकं दयालुं च तत्त्वज्ञानविशारदम् ॥४४॥
भक्त्या गणेशं संपूज्य वस्त्रालङ्कारचन्दनैः । श्रुत्वा गणपतेः खण्डं महावन्ध्या प्रसूयते ॥४५॥
मृतवत्सा काकवन्ध्या ब्रह्मन्पुत्रं लभेद्ध्रुवम् । अदूष्यदूषणपरा शुद्धा चैव लभेत्सुतम् ॥४६॥
संपूर्णं ब्रह्मवैवर्तं श्रुत्वा यल्लभते फलम् । तत्फलं लभते मर्त्यः श्रुत्वेदं खण्डमुत्तमम् ॥४७॥
वाञ्छां कृत्वा तु मनसि शृणोति परमास्थितः । तस्मै ददाति सर्वेष्टं सुरश्रेष्ठो गणेश्वरः ॥४८॥
श्रुत्वा गणपतेः खण्डं विघ्ननाशाय यत्नतः । स्वर्णयज्ञोपवीतं च श्वेतच्छत्रं च माल्यकम् ॥४९॥
प्रदीयते वाचकाय स्वस्तिकं तिललड्डुकान् । परिपक्वफलान्येव देशकालोद्भवानि च ॥५०॥

इति श्रीब्रह्मवैवर्त्ते महापुराणे तृतीये गणपतिखण्डे नारदनारायणसंवादे
परशुरामागमनैतत्खण्डश्रवणफलवर्णनं नाम षट्चत्वारिंशोऽध्यायः ॥४६॥
आदितः श्लोकानां समष्ट्यङ्काः-९,६७५+५०=९,७२५



समाप्तमिदं श्री ब्रह्मवैवर्तपुराणस्य तृतीयं महागणपतिखण्डम् ॥



॥ इति श्रीब्रह्मवैवर्ते महापुराणे द्वितीयं प्रकृतिखण्डं सम्पूर्णम् ॥
*अध्यायानामादितः समष्ट्यङ्काः-९७+४६=१४३*
हिन्दी साहित्य सम्मेलन.प्रयाग , शक १९०३ : सन् १९८१



॥ श्रीगणेशाय नमः ॥
श्रीसरस्वत्यै नमः ॥
॥श्रीगोपीजनवल्लभाय नमः ॥

## ॐ तत्सद्ब्रह्मणे नमः
## श्रीमद्द्वैपायनमुनिप्रणीतं
## ब्रह्मवैवर्तपुराणम्

॥ अथ ब्रह्मवैवर्तीयश्रीकृष्णजन्मखण्डप्रारंभः ॥

## ॥ अथ प्रथमोऽध्यायः ॥

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् । देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥
नारद उवाच ॥
श्रुतं प्रथमतो ब्रह्मन्ब्रह्मखण्डं मनोहरम् । ब्रह्मणो वदनांभोजात्परमाद्भुतमेव च ॥१॥
ततस्तद्वचनात्तूर्णं समागत्य तवांतिकम् । श्रुतं प्रकृतिखण्डं च सुधाखंडात्परं वरम् ॥२॥
ततो गणपतेः खंडमखंडभवखंडनम् । न मे तृप्तं मनो लोलं विशिष्टं श्रोतुमिच्छति ॥३॥
श्रीकृष्णजन्मखंडं च जन्मादेः खंडनं नृणाम् । प्रदीपं सर्वतत्त्वानां कर्मघ्नं हरिभक्तिदम् ॥४॥
सद्यो वैराग्यजननं भवरोगनिकृंतनम् । कारणं मुक्तिबीजानां भवाब्धेस्तारणं परम् ॥५॥
कर्मोपभोगरोगाणां खंडने च रसायनम् । श्रीकृष्णचरणांभोजप्राप्तिसोपान कारणम् ॥६॥
जीवनं वैष्णवानां च जगतां पावनं परम् । वद विस्तार्य मां भक्तं शिष्यं च शरणागतम् ॥७॥
केन वा प्रार्थितः कृष्ण आजगाम महीतलम् । सर्वांशैरेक एवेशः परिपूर्णतमः स्वयम् ॥८॥
युगे कुत्र कुतो हेतोः कुत्र वाऽऽविर्बभूव ह । वसुदेवोऽस्य जनकः को वा का वा च देवकी ॥९॥
वद कस्य कुले जन्म मायया सुविडंबनम् । किं चकार समागत्य केन रूपेण वा हरिः ॥१०॥
जगाम गोकुलं कंसभयेन सूतिकागृहात् । कथं कंसात्कीटतुल्याद्भयेशस्य भयं मुने ॥११॥
हरिर्वा गोपवेषेण गोकुले किं चकार ह । कुतो गोपाङ्गनासार्धं विजहार जगत्पतिः ॥१२॥
का वा गोपांगना के वा गोपाला बालरूपिणः । का वा यशोदा को नंदः किं वा पुण्यं चकार ह ॥१३॥
कथं राधा पुण्यवती देवी गोकुलवासिनी । व्रजे वा व्रजकन्या सा बभूव प्रेयसी हरेः ॥१४॥
कथं गोप्यो दुराराध्यं संप्रापुरीश्वरं परम् । कथं ताश्च परित्यज्य जगाम मथुरां पुनः ॥१५॥
भारावतरणं कृत्वा किं विधाय जगाम सः । कथयस्व महाभाग पुण्यश्रवणकीर्तं ॥१६॥
सुदुर्लभां हरिकथां तरणिं भवसागरे । निषेकभोगनिगडक्लेशच्छेदन कर्तनीम् ॥१७॥

पापेंधनानां दहने ज्वलदग्निशिखामिव । पुंसां श्रुतवतां कोटिजन्मकिल्बिषनाशिनीम् ॥१८॥
मुक्तिं कर्णसुधारम्यां शोकसागरनाशिनीम् । मह्यं भक्ताय शिष्याय ज्ञानं देहि कृपानिधे ॥१९॥
तपोजपमहादानात्पृथिव्यां तीर्थदर्शनात् । श्रुतिपाठादनशनाद्व्रताद्देवार्चनादपि ॥२०॥
दीक्षायाः सर्वयज्ञेषु यत्फलं लभते नरः । षोडशीं ज्ञानदानस्य कलां नार्हति तत्फलम् ॥२१॥
पित्राऽहं प्रेषितो ज्ञानादानाय तव सन्निधिम् । सुधासमुद्रं संप्राप्य को वाऽन्यत्पातुमिच्छति ॥२२॥
श्रीनारायण उवाच ॥
मया ज्ञातोऽसि धन्यस्त्वं पुण्यराशिः सुमूर्तिमान् । करोषि भ्रमणं लोकान्पावितुं कुलपावन ॥२३॥
जनानां हृदयं सद्यः सुव्यक्तं वचनेन वै । शिष्ये कलत्रे कन्यायां दौहित्रे बांधवेऽपि च ॥२४॥
पुत्रे पौत्रे च वचसि प्रतापे चापदि स्त्रियाम् । वृद्धौ वैरिणि विद्यायां ज्ञायते हृदयं नृणाम् ॥२५॥
जीवन्मुक्तोऽसि पूतस्त्वं शुद्धभक्तो गदाभृतः । पुनासि पादरजसा सर्वाधारां वसुन्धराम् ॥२६॥
पुनासि लोकान्त्सर्वांश्च स्वीयविग्रहदर्शनात् । सुमंगलां हरिकथां तेन त्वं श्रोतुमिच्छसि ॥२७॥
यत्र कृष्णकथाः संति तत्रैव सर्वदेवताः । ऋषयो मुनयश्चैव तीर्थानि निखिलानि च ॥२८॥
कथाः श्रुत्वा कथान्ते ते यान्ति सन्तो निरापदम् । भवन्ति तानि तीर्थानि येषु कृष्णकथाः शुभाः ॥२९॥
सद्यः कृष्णकथावक्ता स्वस्य पुंसां शतं शतम् । समुद्धृत्य श्रुतवतां पुनाति निखिलं कुलम् ॥३०॥
प्रष्टा तु प्रश्नमात्रेण पुनाति कुलमात्मनः । श्रोता श्रवणमात्रेण स्वकुलं स्व स्वबान्धवान् ॥३१॥
शतजन्मतपस्तप्तो जन्मेदं भारते लभेत् । करोति सफलं जन्म श्रुत्वा हरिकथामृतम् ॥३२॥
अर्चनं वन्दनं मन्त्रजपः सेवनमेव च । स्मरणं कीर्तनं शश्वद्गुणश्रवणमीप्सितम् ॥३३॥
निवेदनं तस्य दास्यं नवधा भक्तिलक्षणम् । करोति जन्म सुफलं कृत्वैतानि च नारद ॥३४॥
न च विघ्नो भवेत्तस्य परमायुर्न नश्यति । न याति तत्पुरः कालो वैनतेयमिवोरगः ॥३५॥
न जहाति समीपं च क्षणं तस्य हरिः स्वयम् । उपतिष्ठति तूर्णं तमणिमादिकसिद्धयः ॥३६॥
सुदर्शनं भ्रमत्येव तस्य पार्श्वे दिवानिशम् । कृष्णाज्ञया च रक्षार्थं को वा किं कर्तुमीश्वरः ॥३७॥
न यान्ति तत्समीपं च स्वप्नेऽपि यमकिंकराः । ज्वलदग्निं यथा दृष्ट्वा शलभा न व्रजन्ति तम् ॥३८॥
व्याधयो विपदः शोका विप्राश्च न प्रयान्ति तम् । न याति तत्समीपं च मृत्युर्मृत्युभयान्मुने ॥३९॥
ऋषयो मुनयः सिद्धाः सन्तुष्टाः सर्वदेवताः । स च सर्वत्र निःशंकः सुखी कृष्णप्रसादतः ॥४०॥
तव कृष्णकथायां च रतिरात्यंतिकी सदा । जनकस्य स्वभावो हि जन्ये तिष्ठति निश्चितम् ॥४१॥
विप्रेन्द्र का प्रशंसेयं जन्म ते ब्रह्ममानसे । यत्र यत्र कुले जन्म तन्मतिस्तादृशी भवेत् ॥४२॥
पिता विधाता जगतां कृष्णपादाब्जसेवया । नित्यं करोति यः शश्वन्नवधा भक्तिलक्षणम् ॥४३॥
रतिः कृष्णकथायां च यस्याश्रुपुलकोद्गमः । मनो निमग्नं तत्रैव स भक्तः कथितो बुधैः ॥४४॥
पुत्रदारादिकं सर्वं जानाति श्रीहरेरिति । आत्मना मनसा वाचा स भक्तः कथितो बुधैः ॥४५॥
निर्जने तीर्थसंपर्के निःसंगा ये मुदाऽन्विताः । ध्यायंते चरणांभोजं श्रीहरेस्ते च वैष्णवाः ॥४६॥
दयाऽस्ति सर्वजीवेषु सर्वं कृष्णमयं जगत् । यो जानाति महाज्ञानी स भक्तो वैष्णवो मतः ॥४७॥
शश्वद्ये नाम गायन्ति गुणं मन्त्रं जपन्ति च । कुर्वन्ति श्रवणं गाथा वदन्ति तेऽतिवैष्णवाः ॥४८॥
लब्धानीष्टानि वस्तूनि प्रदातुं हरये मुदा । तूर्णं यस्य मनो हृष्टं स भक्तो ज्ञानिनां वरः ॥४९॥
यन्मनो हरिपादाब्जे स्वप्ने ज्ञाने दिवानिशम् । पूर्वकर्मोपभोगं च बहिर्भुङ्क्ते स वैष्णवः ॥५०॥
गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णे विशत्ययम् । तं वैष्णवं महापूतं प्रवदन्ति मनीषिणः ॥५१॥
पूर्वान्त्सप्त परान्त्सप्त सप्त मातामहादिकान् । सोदरानुद्धरेद्भक्तः स्वप्रसूं च प्रसूप्रसूम् ॥५२॥
कलत्रं कन्यकां बन्धुं शिष्यं दौहित्रमात्मनः । किंकरान्किंकरीश्चैवमुद्धरेद्वैष्णवः सदा ॥५३॥
सदा वाञ्छन्ति तीर्थानि वैष्णवस्पर्शदर्शने । पापिदत्तानि पापानि तेषां नश्यन्ति सङ्गतः ॥५४॥
गोदोहनक्षणं यावद्यत्र तिष्ठन्ति वैष्णवाः । तत्र सर्वाणि तीर्थानि सन्ति तावन्महीतले ॥५५॥
ध्रुवं तत्र मृतः पापी मुक्तो याति हरेः पदम् । तथैव ज्ञानगङ्गायामंते कृष्णस्मृतौ यथा ॥५६॥
तुलसीकानने गोष्ठे श्रीकृष्णमन्दिरे परे । वृंदारण्ये हरिद्वारे तीर्थेष्वन्येषु वा यथा ॥५७॥
पापानि पापिनां यान्ति तीर्थस्नानावगाहनात् । तेषां पापानि नश्यंति वैष्णवस्पर्शवायुना ॥५८॥
न हि स्थातुं शक्नुवन्ति पापान्येव कृतानि च । ज्वलदग्नौ यथा क्षिप्रं शुष्काणि हि तृणानि च ॥५९॥
भक्तं वर्त्मनि गच्छन्तं ये ये पश्यन्ति मानवाः । सप्तजन्मार्जिताघानि तेषां नश्यन्ति निश्चितम् ॥६०॥
ये निन्दन्ति हृषीकेशं तद्भक्तं पुण्यरूपिणम् । शतजन्मार्जितं पुण्यं तेषां नश्यति निश्चितम् ॥६१॥
ते पच्यन्ते महाघोरे कुम्भीपाके भयानके । भक्षिताः कीटसंघेन यावच्चन्द्रदिवाकरौ ॥६२॥
तस्य दर्शनमात्रेण पुण्यं नश्यति निश्चितम् । गङ्गां स्नात्वा रविं नत्वा तदा विद्वान्विशुध्यति ॥६३॥
वैष्णवस्पर्शमात्रेण मुक्तो भवति पातकी । तस्य पापानि हन्त्येव स्वान्तःस्थो मधुसूदनः ॥६४॥

इत्येवं कथितो विप्र विष्णुवैष्णवयोर्गुणः । अधुना श्रीहरेर्जन्म निबोध कथयामि ते ॥६५॥
इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंडे नारायणनारदसंवादे
विष्णुवैष्णवयोर्गुणप्रशंसाप्रस्ताववर्णनं नाम प्रथमोऽध्यायः ॥१॥
आदितः श्लोकानां समष्ट्यङ्काः-९,७२५+६५=९,७९०



## ॥ अथ द्वितीयोऽध्यायः ॥

॥ श्रीनारायण उवाच ॥
येन वा प्रार्थितः कृष्ण आजगाम महीतलम् । यं यं विधाय भूमौ स जगाम स्वालयं विभुः ॥१॥
भारावतरणोपायं दुष्टानां च वधोद्यमम् । सर्वं ते कथयिष्यामि सुविचार्य विधानतः ॥२॥
अधुना गोपवेषं च गोकुलागमनं हरेः । राधा गोपालिका येन निबोध कथयामि ते ॥३॥
शङ्खचूडवधं पूर्वं संक्षेपात्कथितं श्रुतम् । अधुना तत्सुविस्तार्य निबोध कथयामि ते ॥४॥
श्रीदाम्नः कलहश्चैव बभूव राधया सह । श्रीदामा शङ्खचूडश्च शापात्तस्या बभूव ह ॥५॥
राधां शशाप श्रीदामा याहि योनिं च मानवीम् । व्रजे व्रजांगना भूत्वा विचरस्व महीतले ॥६॥
भीता श्रीदामशापात्सा श्रीकृष्णं समुवाच ह । गोपीरूपा भविष्यामि श्रीदामा मां शशाप ह ॥७॥
कमुपायं करिष्यामि वद मां भयभंजन । त्वया विना कथमहं धरिष्यामि स्वजीवनम् ॥८॥
क्षणमेकं युगशतं कालनाथ त्वया विना । चक्षुर्निमेषविरहाद्भवेदन्धं मनो मम ॥९॥
शरत्पार्वणचन्द्राभं क्षुधापूर्णाननं तव । नाथ चक्षुश्चकोराभ्यां पिबाम्यहमहर्निशम् ॥१०॥
त्वमात्मा मे मनः प्राणा देहमात्रं वहाम्यहम् । दृष्टिशक्तिश्च चक्षुस्त्वं जीवनं परमं धनम् ॥११॥
स्वप्ने ज्ञाने त्वयि मनः स्मरामि त्वत्पदांबुजम् । तव दास्यं विना नाथ न जीवामि क्षणं विभो ॥१२॥
कृष्णस्तद्वचनं श्रुत्वा बोधयामास सुंदरीम् । वक्षसि प्रेयसीं कृत्वा चकार निर्भयां च ताम् ॥१३॥
महीतलं गमिष्यामि वाराहे च वरानने । मया सार्धं भूगमनं जन्म तेऽपि निरूपितम् ॥१४॥
व्रजं गत्वा व्रजे देवि विहरिष्यामि कानने । मम प्राणाधिका त्वं च भयं किं ते मयि स्थिते ॥१५॥
तामित्युक्त्वा हरिस्तत्र विरराम जगत्पतिः । अतो हेतोर्जगन्नाथो जगाम नन्दगोकुलम् ॥१५॥
किं वा तस्य भयं कंसाद्भयान्तकारकस्य च । माया भयच्छलेनैव जगाम राधिकान्तिकम् ॥१७॥
विजहार तया सार्धं गोपवेषं विधाय सः । सह गोपांगनाभिश्च प्रतिज्ञापालनाय च ॥१८॥
ब्रह्मणा प्रार्थितः कृष्णः समागत्य महीतलम् । भारावतरणं कृत्वा जगाम स्वालयं विभुः ॥१९॥
नारद उवाच ॥
श्रीदाम्नः कलहश्चैव कथं वा राधया सह । संक्षेपात्कथितं पूर्वं संव्यस्य कथयाधुना ॥२०॥
श्रीनारायण उवाच ॥
एकदा राधया सार्धं गोलोके श्रीहरिः स्वयम् । विजहार महारण्ये निर्जने रासमंडले ॥२१॥
राधिकासुखसंभोगाद् बुबुधे न स्वकं परम् । कृत्वा विहारं श्रीकृष्णस्तामपृष्ट्वा विहाय च ॥२२॥
गोपिकां विरजामन्यां शृङ्गारार्थं जगाम ह । वृंदारण्ये च विरजा सुभगा राधिकासमा ॥२३॥
तस्या वयस्याः सुंदर्यो गोपीनां शतकोटयः । कृष्णप्राणाधिका गोपी धन्या मान्या च योषिताम् ॥२४॥
रत्नसिंहासनस्था सा ददर्श हरिमन्तिके । ददर्श श्रीहरिस्तां च शरच्चन्द्रनिभाननाम् ॥२५॥
मनोहरां सस्मितां च पश्यन्तीं वक्रचक्षुषा । सदा षोडशवर्षीयां प्रोद्भिन्ननवयौवनाम् ॥२६॥
रत्नालंकारशोभाढ्यां भूषितां शुक्लवाससा । पुलकांकितसर्वाङ्गीं कामबाणप्रपीडिताम् ॥२७॥
दृष्ट्वा तां श्रीहरिस्तूर्णं विजहार तया सह । पुष्पतल्पे महारण्ये निर्जने रत्नमण्डपे ॥२८॥
मूर्च्छामवाप विरजा कृष्णशृङ्गारकौतुकात् । कृत्वा वक्षसि प्राणेशं कोटिकन्दर्पसन्निभम् ॥२९॥
तया सक्तं श्रीहरिं च रत्नमण्डपसंस्थितम् । दृष्ट्वा च राधिकाल्यश्च चक्रुस्तां च निवेदनम् ॥३०॥
तासां च वचनं श्रुत्वा सुष्वाप च चुकोप ह । भृशं रुरोद सा देवी रक्तपङ्कजलोचना ॥३१॥
ता उवाच महादेवी मां तं दर्शयितुं क्षमाः । यदि सत्यं ब्रूत यूयं मया सार्धं प्रगच्छत ॥३२॥
करिष्यामि फलं गोप्याः कृष्णस्य च यथोचितम् । को रक्षिताऽद्य तस्याश्च मयि शास्तिं प्रकुर्वति ॥३३॥
शीघ्रमानयताल्यश्च तया सार्द्धं हरिं प्रियम् । अन्तर्वक्त्रं सस्मितं च विषकुम्भं सुधामुखम् ॥३४॥
मदाश्रयं समागन्तुं यूयं दासं न दास्यथ । तमेव मण्डपं रम्यं यात संरक्षतेश्वरम् ॥३५॥
राधिकावचनं श्रुत्वा काश्चिद्गोप्यो भयान्विताः । ताः सर्वाः संपुटाञ्जल्यो भक्तिनम्रात्मकंधराः ॥
तामूचुः पुरतः स्थित्वा सर्वा एव प्रियां सतीम् ॥३६॥
॥ आल्य ऊचुः ॥

वयं तं दर्शयिष्यामो विरजासहितं विभुम् ॥३७॥
तासां च वचनं श्रुत्वा रथमारुह्य सुंदरी । जगाम सार्धं गोपीभिस्त्रिषष्टिशतकोटिभिः ॥३८॥
रत्नेंद्रसाररचितं कोटिसूर्यसमप्रभम् । मणींद्रसाररचितं कलशानां त्रिकोटिभिः ॥३९॥
राजितं चित्रराजीभिर्वैजयंतीविराजितम् । लक्षचक्रसमायुक्तं मनोयायि मनोहरम् ॥४०॥
मणिसारविकारैश्च कोटिस्तंभैः सुशोभितम् । नानाचित्रविचित्रैश्च सहितैः सुमनोहरैः ॥४१॥
सिंदूराकारमणिभिर्मध्यदेशे विभूषितैः । रत्नकृत्रिमसिंहैश्च रथचक्रोर्ध्वसंस्थितैः ॥४२॥
चतुर्लक्षपरिमितैश्चित्रघंटासमन्वितैः । चित्रपुत्तलिशोभाढ्यैर्विचित्रैश्च विराजितम् ॥४३॥
रतिमंदिरलक्षैश्च रत्नसारविनिर्मितैः । मणिसारकपाटैश्च शोभितैश्चित्रवाजिभिः ॥४४॥
मणींद्रसारकलशैः शेखरोज्वलितैर्युतम् । भोगद्रव्यसमायुक्तं वेषद्रव्यसमन्वितम् ॥४५॥
शोभितं रत्नशय्याभी रत्नपात्रघटान्वितम् । हरिन्मणीनां वेदीनां समूहेन समन्वितम् ॥४६॥
कुंकुमाभमणीनां च सोपानैः कोटिभिर्युतम् । स्यमंतकैः कौस्तुभैश्च रुचकैः प्रवरैस्तथा ॥४७॥
पद्मकृत्रिमकोटीनां शतकैश्च सुशोभितम् । चित्रकाननवापीभिर्विशिष्टाभिर्विराजितम् ॥४८॥
रत्नेंद्रसाररचितकलशोज्वलशेखरम् । शतयोजनमूर्ध्वं च दशयोजनविस्तृतम् ॥४९॥
पारिजातप्रसूनानां मालाकोटिविराजितम् । कुंदानां करवीराणां यूथिकानां तथैव च ॥५०॥
सुचारुचंपकानां च नागेशानां मनोहरैः । मल्लिकानां मालतीनां माधवीनां सुगंधिनाम् ॥५१॥
कदंबानां च मालानां कदंबैश्च विराजितम् । सहस्रदलपद्मानां मालाभिश्च विराजितम् ॥५२॥
चित्रपुष्पोद्यानसरः काननैश्च विभूषितम् । सर्वेषां स्यंदनानां च श्रेष्ठं वायुवहं परम् ॥५३॥
तत्सूक्ष्मवस्त्रसाराणां वरैराच्छादितं परम् । रत्नदर्पणलक्षाणां शतकैश्च समन्वितम् ॥५४॥
श्वेतचामरकोटीभिर्वज्रकोटिभिरन्वितम् । चन्दनागरुकस्तूरीकुंकुमद्रवचर्चितैः ॥५५॥
पारिजातप्रसूनानां कोटितल्पविराजितम् । कोटिघंटासमायुक्तं पताकाकोटिभिर्युतम् ॥५६॥
रत्नशय्याकोटिभिश्च चित्रवज्रपरिच्छदैः । चंदनाक्तैश्चंपकानां कुंकुमैश्च विचित्रितैः ॥५७॥
पुष्पोपधानसंयुक्तैः शृंगाराहाभिरन्वितम् । अदृश्यैरश्रुतैर्द्रव्यैः सुंदरैश्च विभूषितम् ॥५८॥
एवंभूताद्रथात्तूर्णमवरुह्य हरिप्रिया । जगाम सहसा देवी तं रत्नमंडपं मुने ॥५९॥
द्वारे नियुक्तं ददृशे द्वारपालं मनोहरम् । लक्षगोपैः परिवृतं स्मेराननसरोरुहम् ॥६०॥
गोपं श्रीदामनामानं श्रीकृष्णप्रियकिंकरम् । तमुवाच रुषा देवी रक्तपंकजलोचना ॥६१॥
गच्छ दूरं गच्छ दूरं रतिलंपटकिंकर । कीदृशीं मत्परां कांतां द्रक्ष्यामि त्वत्प्रभोरहम् ॥६२॥
राधिकावचनं श्रुत्वा निःशंकः पुरतः स्थितः । तामेव न ददौ गंतुं वेत्रपाणिर्महाबलः ॥६३॥
तूर्णं च राधिकाल्यश्च श्रीदामानं सकिंकरम् । बलेन प्रेरयामासुः कोपेन स्फुरिताधराः ॥६४॥
श्रुत्वा कोलाहलं शब्दं गोपिकानां हरिः स्वयम् । ज्ञात्वा च कोपितां राधामंतर्धानं चकार ह ॥६५॥
विरजा राधिकाशब्दादन्तर्धानं हरेरपि । दृष्ट्वा राधां भयार्ता सा जहौ प्राणांश्च योगतः ॥६६॥
सद्यस्तत्र सरिद्रूपं तच्छरीरं बभूव ह । व्याप्तं च वर्तुलाकारं तया गोलोकमेव च ॥६७॥
कोटियोजनविस्तीर्णं प्रस्थेऽतिनिम्नमेव च । दैर्घ्ये दशगुणं चारु नानारत्नाकरं परम् ॥६८॥॥

इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंडे नारायणनारदसंवादे विरजानदप्रस्तावनवर्णनं नाम द्वितीयोऽध्यायः ॥२॥
आदितः श्लोकानां समष्ट्यङ्काः-९,७९०+६८=९,८५८



## ॥ अथ तृतीयोऽध्यायः ॥

॥ श्रीनारायण उवाच ॥

राधा रतिगृहं गत्वा न ददर्श हरिं मुने । विरजां च सरिद्रूपां दृष्ट्वा गेहं जगाम सा ॥१॥
श्रीकृष्णो विरजां दृष्ट्वा सरिद्रूपां प्रियां सतीम् । उच्चै रुरोद विरजातीरे नीरमनोहरे ॥२॥
ममांतिकं समागच्छ प्रेयसीनां परे वरे । त्वया विनाऽहं सुभगे कथं जीवामि सुंदरि ॥३॥
नद्यधिष्ठात्रि देवि त्वं भव मूर्तिमती सती । ममाशिषा रूपवती सुंदरी योषिता वरा ॥४॥
पूर्वरूपाच्च सौभाग्यादिदानीं सुभगा भव । पुरातनं शरीरं ते सरिद्रूपमभूत्सति ॥५॥
जलादुत्थाय चागच्छ विधाय तनुमुत्तमाम् । अष्टौ सिद्धीर्मया दत्ताः सुरसुंदरि सत्वरम् ॥६॥
कृष्णाज्ञया च विरजा विधाय तनुमुत्तमाम् । आजगाम हरेरग्रे साक्षाद्राधेव सुंदरी ॥७॥
पीतवस्त्रपरीधाना स्मेराननसरोरुहा । पश्यन्तं प्राणनाथं च पश्यन्ती वक्रचक्षुषा ॥८॥
नितंबश्रोणिभारार्ता पीनोन्नतपयोधरा । मानिनी मानिनीनां च गजेंद्रमंदगामिनी ॥९॥
सुंदरी सुदरीणां च धन्या मान्या च योषिताम् । चारुचंपकवर्णाभा पक्वबिंबाधरा वरा ॥१०॥

पक्व दाडिमबीजाभदंतपंक्तिमनोहरा । शरत्पार्वणचन्द्रास्या फुल्लेंदीवरलोचना ॥११॥
कस्तूरीबिंदुना सार्धं सिंदूरबिंदुभूषिता । चारुपत्रक शोभाढ्या सुचारुकबरीयुता ॥१२॥
रत्नकुंडलगंडस्था भूषिता रत्नमालया । गजमौक्तिकनासाग्रा मुक्ताहारविराजिता ॥१३॥
रत्नकंकणकेयूरचारुशङ्खकरोज्वला । किंकिणीजालशब्दाढ्या रत्नमंजीररंजिता ॥१४॥
तां च रूपवतीं दृष्ट्वा प्रेमोद्रेका जगत्पतिः । चकारालिंगनं तूर्णं चुचुंब च मुहुर्मुहुः ॥१५॥
नानाप्रकारशृंगारं विपरीतादिकं विभुः । रहसि प्रेयसीं प्राप्य चकार च पुनः पुनः ॥१६॥
विरजा सा रजोयुक्ता धृत्वा वीर्यममोघकम् । सद्यो बभूव तत्रैव धन्या गर्भवती सती ॥१७॥
दधार गर्भमीशस्य दिव्यं वर्षशतं च सा । ततः सुषाव तत्रैव पुत्रान्सप्त मनोहरान् ॥१८॥
माता सा सप्तपुत्राणां श्रीकृष्णस्य प्रिया सती । तस्थौ तत्र सुखासीना सार्द्धं पुत्रैश्च सप्तभिः ॥१९॥
एकदा हरिणा सार्द्धं वृंदारण्ये च निर्जने । विजहार पुनः साध्वी शृंगारासक्तमानसा ॥२०॥
एतस्मिन्नंतरे तत्र मातुः क्रोडं जगाम ह । कनिष्ठपुत्रस्तस्याश्च भ्रातृभिः पीडितो भिया ॥२१॥
भीतं स्वतनयं दृष्ट्वा तत्याज तां कृपानिधिः । क्रोडे चकार बालं सा कृष्णो राधागृहं ययौ ॥२२॥
प्रबोध्य बालं सा साध्वी न ददर्शान्तिके प्रियम् । विललाप भृशं तत्र शृंगारातृप्तमानसा ॥२३॥
शशाप स्वसुतं कोपाल्लवणोदो भविष्यसि । कदाऽपि ते जलं केचिन्न खादिष्यन्ति जीविनः ॥२४॥
शशाप बालान्सर्वांश्च यांतु मूढा महीतलम् । गच्छध्वं च महीं मूढा जंबुद्वीपं मनोहरम् ॥२५॥
स्थितिर्नैकत्र युष्माकं भविष्यति पृथक्पृथक् । द्वीपे द्वीपे स्थितिं कृत्वा तिष्ठंतु सुखिनः सदा ॥२६॥
द्वीपस्थाभिर्नदीभिश्च सह क्रीडंतु निर्जने । कनिष्ठो मातृशापाच्च लवणोदो बभूव ह ॥२७॥
कनिष्ठः कथयामास मातृशापं च बालकान् । आजग्मुर्दुःखिताः सर्वे मातृस्थाने च बालकाः ॥२८॥
श्रुत्वा विवरणं सर्वे प्रजग्मुर्धरणीतलम् । प्रणम्य चरणं मातुर्भक्तिनम्रात्ममूर्तयः ॥२९॥
सप्तद्वीपसमुद्राश्च सप्त तस्थुर्विभागशः । कनिष्ठाद्वृद्धपर्यन्तं द्विगुणं द्विगुणं मुने ॥३०॥
लवणेक्षुसुरा सर्पिर्दधिदुग्धजलार्णवाः । एतेषां च जलं पृथ्व्यां सस्यार्थं च भविष्यति ॥३१॥
व्याप्ताः समुद्राः सप्तैव सप्तद्वीपां वसुंधराम् । रुरुदुर्बालकाः सर्वे मातृभ्रातृशुचाऽन्विताः ॥३२॥
रुरोद च भृशं साध्वी पुत्रविच्छेदकातरा । मूर्च्छामवाप शोकेन पुत्राणां भर्तुरेव च ॥३३॥
तां शोकसागरे मग्नां विज्ञाय राधिकापतिः । आजगाम पुनस्तस्याः स्मेराननसरोरुहः ॥३४॥
दृष्ट्वा हरिं सा तत्याज शोकं रोदनमेव च । आनन्दसागरे मग्ना दृष्ट्वा कांतं बभूव ह ॥३५॥
चकार श्रीहरिं क्रोडे विजहार स्मरातुरा । तां च पुत्र परित्यक्तां हरिस्तुष्टो बभूव ह ॥३६॥
वरं तस्यै ददौ प्रीत्या प्रसन्नवदनेक्षणः । कांते नित्यं तव स्थानमागमिष्यामि निश्चितम् ॥३७॥
यथा राधा तत्समा त्वं भविष्यसि प्रिया मम । पुत्रान्द्रक्ष्यसि नित्यं त्वं मद्वरस्य प्रसादतः ॥३८॥
इत्युक्तवंतं श्रीकृष्णं वसंतं विरजांतिके । दृष्ट्वा राधावयस्याश्च कथयामासुरीश्वरीम् ॥३९॥
श्रुत्वा रुरोष सा देवी सुष्वाप क्रोधमंदिरे । एतस्मिन्नंतरे कृष्णो जगाम राधिकांतिकम् ॥४०॥
स तस्थौ राधिकाद्वारे श्रीदाम्ना सह नारद । रासेश्वरी हरिं दृष्ट्वा रुष्टोवाच प्रियं पुरः ॥४१॥
मत्तो बहुतराः कांता गोलोके संति ते हरे । याहि तासां सन्निधानं मया ते किं प्रयोजनम् ॥४२॥
विरजा प्रेयसी कांता सरिद्रूपा बभूव ह । देहं त्यक्त्वा मम भयात्तथाऽपि याहि तां प्रति ॥४३॥
तत्तीरे मंदिरं कृत्वा तिष्ठ तिष्ठ च याहि ताम् । नदी बभूव सा त्वं च नदो भवितुमर्हसि ॥४४॥
नदस्य नद्या सार्द्धं च संगमो गुणवान्भवेत् । स्वजातौ परमा प्रीतिः शयने भोजने सुखात् ॥४५॥
देवचूडामणेः क्रीडा नद्या सार्द्धमहो बत । महाजनः स्मेरमुखः श्रुत्वा सद्यो भविष्यति ॥४६॥
ये त्वां वदंति सर्वेशं ते किं जानंति तत्त्वतः । भगवान्सर्वभूतात्मा नदीं संभोक्तुमिच्छति ॥४७॥
इत्युक्त्वा राधिका देवी विरराम रुषाऽन्विता । नोत्तस्थौ भूमिशयनाद्गोपीलक्षसमन्विता ॥४८॥
काश्चिच्चामरहस्ताश्च काश्चित्सूक्ष्मांशुकांबराः । काश्चित्तांबूलहस्ताश्च काश्चिन्मालाकरा वराः ॥४९॥
वासितोदकराः कीश्चत्कीश्चत्पद्मकरा वराः । काश्चित्सिंदूरहस्ताश्च पानहस्ताश्च काश्चन ॥५०॥
रत्नालंकारहस्ताश्च काश्चित्कज्जलवाहिकाः । वेणुवीणाकराः काश्चित्काश्चित्कंकतिकाकराः ॥५१॥
काश्चिदावीरहस्ताश्च यंत्रहस्ताश्च काश्चन । सुगंधितैलहस्ताश्च काश्चन प्रमदोत्तमाः ॥५२॥
करतालकराः काश्चिद्वेंदुहस्ताश्च काश्चन । काश्चिन्मृदंगमुरजमुरलीतानकारिकाः ॥५३॥
संगीतनिपुणाः कीश्चत्कीश्चन्नर्तनतत्पराः । क्रीडावस्तुकराः काश्चिन्मधुहस्ताश्च काश्चन ॥५४॥
सुधापात्रकराः काश्चिदंघ्रिपीठकराः पराः । वेषवस्तुकराः काश्चित्काश्चिच्चरणसेविकाः ॥५५॥
पुटांजलिकराः काश्चित्काश्चित्स्तुतिपरा वराः । एवं कतिविधाः संति राधिकापुरतो मुने ॥५६॥
बहिर्देशस्थिताः काश्चित्कोटिशः कोटिशः सदा । काश्चिद्द्वारनियुक्ताश्च वयस्या वेत्रधारिकाः ॥५७॥
कृष्णमभ्यंतरं गंतुं न ददुर्द्वारसंस्थिताः । पुरःस्थितं तं प्राणेशं राधा पुनरुवाच सा ॥

नानुरूपमत्यकथ्ययमयोग्यमतिकर्कशम् ॥५८॥
राधिकोवाच ॥
हे कृष्ण विरजाकांत गच्छ मत्पुरतो हरे । कथं दुनोषि मां लोल रतिचौरातिलंपट ॥५९॥
शीघ्रं पद्मावतीं गच्छ रत्नमालां मनोरमाम् । अथवा वनमालां वा रूपेणाप्रतिमां व्रज ॥६०॥
हे नदीकांत देवेश देवानां च गुरोर्गुरो । मया ज्ञातोऽसि भद्रं ते गच्छ गच्छ ममाश्रमात् ॥६१॥
शश्वत्ते मानुषाणां च व्यवहारस्य लंपट । लभतां मानुषीं योनिं गोलोकाद्व्रज भारतम् ॥६२॥
हे सुशीले शशिकले हे पद्मावति माधवि । निवार्यतां च धूर्तोऽयं किंमस्यात्र प्रयोजनम् ॥६३॥
राधिकावचनं श्रुत्वा तमूचुर्गोपिका हरिम् । हितं तथ्यं च विनयं सारं यत्समयोचितम् ॥६४॥
काश्चिदूचुरिति हरे गच्छ स्थानांतरं क्षणम् । राधाकोपापनयने ह्यागमिष्यामहे वयम् ॥६५॥
काश्चिदूचुरिति प्रीत्या क्षणं गच्छ गृहांतरम् । त्वयैव वर्धिता राधा त्वां विना कं च वक्ष्यति ॥६६॥
काश्चिदूचुरिति प्रेम्णा राधिकायां हरिं मुने । क्षणं वृंदावनं गच्छ मानापननावधि ॥६७॥
काश्चिदित्यूचुरीशं च परिहासपरं वचः । मानापनयनं भक्त्या मा(का)निन्याः कुरु कामुक ॥६८॥
काश्चनोचुरितीशं तं याहि जायांतरं तव । लोलुपस्य कथं नाथ करिष्यामो यथोचितम् ॥६९॥
काश्चनोचुरिति हरिं सस्मितं पुरतः स्थितम् । गत्वा समीपमुत्थाय मानापनयनं कुरु ॥७०॥
काश्चनोचुरिति प्राणनाथं गोप्यो दुरक्षरम् । कः क्षमः सांप्रतं द्रष्टुं राधिकामुखपंकजम् ॥७१॥
काश्चनोचुरिति विभुं व्रज स्थानांतरं हरे । कोपापनयने काले पुनरागमनं तव ॥७२॥
काश्चनोचुरितीदं तं प्रगल्भाः प्रमदोत्तमाः । वयं त्वां दारयिष्यामो न चेद्याहि गृहांतरम् ॥७३॥
काश्चिन्निवारयामासुर्माधवं प्रमदोत्तमाः । स्मितवक्त्रं च सर्वेशं स्वस्थमक्रोधमीश्वरम् ॥७४॥
गोपीभिर्वार्यमाणे च जगत्कारणकारणे । सद्यश्चुकोप श्रीदामा हरौ गेहांतरं गते ॥७५॥
कोपादुवाच श्रीदामा राधिकां परमेश्वरीम् । रक्तपद्मेक्षणां रुष्टां रक्तपंकजलोचनाम्(लोचन) ॥७६॥
श्रीदामोवाच ॥
कथं वदसि मातस्त्वं कटुवाक्यं मदीश्वरम् । विचारणां विना देवि करोषि भर्त्सनं वृथा ॥७७॥
ब्रह्मानंतेशदेवेशं (धर्मेशं) जगत्कारणकारणम् । वाणीपद्मालयामायाप्रकृतीशं च निर्गुणम् ॥७८॥
स्वात्मारामं पूर्णकामं करोषि त्वं विडंबनम् । देवीनां प्रवरा त्वं च निबोध यस्य सेवया ॥७९॥
यस्य पादार्चनेनैव सर्वेषामीश्वरी परा । तन्न जानासि कल्याणि किमहं वक्तुमीश्वरः ॥८०॥
भ्रूभंगलीलया कृष्णः स्रष्टुं शक्तश्च त्वद्विधाः । कोटिशः कोटिशो देव्यस्तं न जानासि निर्गुणम् ॥८१॥
वैकुंठे श्रीहरेरस्य चरणांबुजमार्जनम् । करोति केशैः शश्वच्छ्रीः सेवनं भक्तिपूर्वकम् ॥८२॥
सरस्वती च स्तवनैः कर्णपीयूषसुंदरैः । सततं स्तौति यं भक्त्या न जानासि तमीश्वरम् ॥८३॥
भीता च प्रकृतिर्माया सर्वेषां बीजरूपिणी । सततं स्तौति यं भक्त्या तं न जानासि मानिनि ॥८४॥
स्तुवंति सततं वेदा महिम्नः षोडशीं कलाम् । कदापि न विजानंति तं न जानासि भामिनि ॥८५॥
वक्त्रैश्चतुर्भिर्यं ब्रह्मा वेदानां जनको विभुः । स्तौति सेवां च कुरुते चरणांबुजमीश्वरि ॥८६॥
शंकरः पंचभिर्वक्त्रैः स्तौति यं योगिनां गुरुः । साश्रुपूर्णः सपुलकः सेवते चरणांबुजम् ॥८७॥
शेषः सहस्रवदनैः परमात्मानमीश्वरम् । सततं स्तौति यं भक्त्या सेवते चरणांबुजम् ॥८८॥
धर्मःपाता च सर्वेषां साक्षी च जगतां पतिः । भक्त्या च चरणांभोजं सेवते सततं मुदा ॥८९॥
श्वेतद्वीपनिवासी यः पाता विष्णुः स्वयं विभुः । तस्यांशश्च तथा यं यं धार्यतेऽप्यक्षरं परम् ॥९०॥
सुरासुरमुनींद्राश्च मनवो मानवा बुधाः । सेवंते न हि पश्यंति स्वप्नेऽपि चरणांबुजम् ॥९१॥
क्षिप्रं रोषं परित्यज्य भज पादांबुजं हरेः । भ्रूभंगलीलामात्रेण सृष्टिसंहर्तुरेव च ॥९२॥
निमेषमात्रादस्यैव ब्रह्मणः पतनं भवेत् । यस्यैकदिवसेऽप्यष्टाविंशतींद्राः पतंत्यपि ॥९३॥
एवमष्टोत्तरशतमायुर्यस्य जगद्विधेः । त्वं वा काऽन्याश्च वा राधे मदीश्वरवशेऽखिलम् ॥९४॥
श्रीदाम्नो वचनं श्रुत्वा केवलं कटुमुज्वलम् । सद्यश्चुकोप सा ब्रह्मन्सद्यः प्राणेश्वरी हरेः ॥९५॥
रासेश्वरी बहिर्गत्वा तमुवाच ह निष्ठुरम् । स्फुरदोष्ठी मुक्तकेशी रक्तांभोरुहलोचना ॥९६॥
राधिकोवाच ॥
रेरे जाल्म महामूढ शृणु लंपटकिंकर । त्वं च जानासि सर्वार्थं न जानामि त्वदीश्वरम् ॥९७॥
त्वदीश्वरश्च श्रीकृष्णो न ह्यस्माकं व्रजाधम । जानामि जनकं स्तौषि सदा निंदसि मातरम् ॥९८॥
यथाऽसुराश्च त्रिदशा नित्यं निंदंति संततम् । तथा निंदसि मां मूढ तस्मात्त्वमसुरो भव ॥९९॥
गोप व्रजासुरीं योनिं गोलोकाच्च बहिर्भव । मयाऽद्य शप्तो मूढस्त्वं कस्त्वां रक्षितुमीश्वरः ॥१००॥
रासेश्वरी तमित्युक्त्वा सुष्वाप विरराम च । वयस्याः सेवयामासुश्चामरै रत्नमुष्टिभिः ॥१०१॥
श्रुत्वा च वचनं तस्याः कोपेन स्फुरिताधरः । शशाप तां च श्रीदामा व्रज योनिं च मानुषीम् ॥१०२॥

श्रीदामोवाच ॥
मानुष्या इव कोपस्ते तस्मात्त्वं मानुषी भुवि ॥१०३॥
भविष्यसि न संदेहो मया शप्ता त्वमंबिके । छायया कलया वाऽपि परशक्त्या कलंकिना ॥१०४॥
मूढा रापाणपत्नी त्वां वक्ष्यति जगतीतले । रापाणः श्रीहरेरंशो वैश्यो वृंदावने वने ॥१०५॥
भविष्यति महायोगी राधाशापेन गर्भजः । गोकुले प्राप्य तं कृष्णं विहरिष्यसि कानने ॥१०६॥
भविता ते वर्षशतं विच्छेदो हरिणा सह । पुनः प्राप्य तमीशं च गोलोकमागमिष्यसि ॥१०७॥
तामित्युक्त्वा च नत्वा च स जगाम हरेः पुरः । गत्वा प्रणम्य श्रीकृष्णं शापाख्यानमुवाच ह ॥१०८॥
आनुपूर्व्यात्तु तत्सर्वं रुरोद च भृशं पुनः । उवाच तं रुदंतं च गच्छध्वं धरणीतलम् ॥१०९॥
न जेता ते त्रिभुवने ह्यसुरेंद्रो भविष्यसि । काले शंकरशूलेन देहं त्यक्त्वा ममांतिकम् ॥११०॥
आगमिष्यसि पंचाशद्युगांते तु ममाशिषा । श्रीकृष्णस्य वचः श्रुत्वा तमुवाच शुचाऽन्वितः ॥१११॥
त्वद्भक्तिरहितं मां च कदाचिन्न करिष्यसि । इत्युक्त्वा श्रीहरिं नत्वा जगाम स्वाश्रमाद्बहिः ॥११२॥
पश्चाज्जगाम सा देवी रुरोद च पुनःपुनः । क्व यासि वत्सेत्युच्चार्य विललाप भृशं सती ॥११३॥
श्रीदामाऽपि च तां नत्वा रुरोद प्रेमविह्वलः । स एव शङ्खचूडश्च बभूव तुलसीपतिः ॥११४॥
गते श्रीदाम्नि सा देवी जगामेश्वरसन्निधिम् । सर्वं निवेदयामास हरिः प्रत्युत्तरं ददौ ॥११५॥
शोकातुरां च तां कृष्णो बोधयामास प्रेयसीम् । शङ्खचूडश्च कालेन संप्राप पुनरीश्वरम् ॥११६॥
राधा जगाम धरणीं वाराहे हरिणा सह । वृषभानुगृहे जन्म ललाभ गोकुले मुने ॥११७॥
इत्येवं कथितं सर्वं श्रीकृष्णाख्यानमंगलम् । सर्वेषां वांछितं सारं किं भूयः श्रोतुमिच्छसि ॥११८॥

इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंडे नारायणनारदसंवादे
सप्तसमुद्रजन्मराधाश्रीदामशापोद्भवो नाम तृतीयोऽध्यायः ॥३॥
आदितः श्लोकानां समष्ट्यङ्काः-९,८५८+११८=९,९७६



## ॥ अथ चतुर्थोऽध्यायः ॥

नारद उवाच ॥
केन वा प्रार्थितः कृष्णो महीं च केन हेतुना । आजगाम जगन्नाथो वद वेदविदां वर ॥१॥
नारायण उवाच ॥
पुरा वाराहकल्पे सा भाराक्रान्ता वसुन्धरा । भृशं बभूव शोकार्ता ब्रह्माणं शरणं ययौ ॥२॥
सुरैश्चासुरसंतप्तैर्भृशमुद्विग्नमानसैः । सार्द्धं तैस्तां दुर्गमां च जगाम वेधसः सभाम् ॥३॥
ददर्श तस्यां देवेशं ज्वलन्तं ब्रह्मतेजसा । ऋषीन्द्रैश्च मुनीन्द्रैश्च सिद्धेन्द्रैः सेवितं मुदा ॥४॥
अप्सरोगणनृत्यं च पश्यन्तं सस्मितं मुदा । गन्धर्वाणां च सङ्गीतं श्रुतवन्तं मनोहरम् ॥५॥
जपन्तं परमं ब्रह्म कृष्ण इत्यक्षरद्वयम् । भक्त्यानन्दाश्रुपूर्णं तं पुलकाङ्कितविग्रहम् ॥६॥
भक्त्या सा त्रिदशैः सार्द्धं प्रणम्य चतुराननम् । सर्वं निवेदनं चक्रे दैत्यभारादिकं मुने ॥
साऽश्रुपूर्णा सपुलका तुष्टाव च रुरोद च ॥७॥
तामुवाच जगद्धाता कथं स्तौ षि च रोदिषि । कथमागमनं भद्रे वद भद्रं भविष्यति ॥८॥
सुस्थिरा भव कल्याणि भयं किं ते मयि स्थिते । आश्वास्य पृथिवीं ब्रह्मा देवान्पप्रच्छ सादरम् ॥९॥
कथमागमनं देवा युष्माकं मम सन्निधिम् । ब्रह्मणो वचनं श्रुत्वा देवा ऊचुः प्रजापतिम् ॥१०॥
भाराक्रान्ता च वसुधा दस्युग्रस्ता वयं प्रभो । त्वमेव जगतां स्रष्टा शीघ्रं नो निष्कृतिं कुरु ॥११॥
गतिस्त्वमस्या भो ब्रह्मन्निर्वृतिं कर्तुमर्हसि । पीडिता येन भारेण पृथिवीयं पितामह ॥१२॥
वयं तेनैव दुःखार्तास्तद्भारहरणं कुरु । देवानां वचनं श्रुत्वा तां पप्रच्छ जगद्विधिः ॥१३॥
दूरीकृत्य भयं वत्से सुखं तिष्ठ ममान्तिकम् । केषां भारमशक्ता त्वं सोढुं पङ्कजलोचने ॥१४॥
अपनेष्यामि तं भद्रे भद्रं ते भविता ध्रुवम् । तस्य सा वचनं श्रुत्वा तमुवाच स्वपीडनम् ॥
पीडिता येन येनैवं प्रसन्नवदनेक्षणा ॥१५॥
क्षितिरुवाच ॥
शृणु तात प्रवक्ष्यामि स्वकीयां मानसीं व्यथाम् । विना बन्धुं सविश्वासं नान्यं कथितुमर्हति ॥१६॥
स्त्रीजातिरबला शश्वद्रक्षणीया स्वबन्धुभिः । जनकस्वामिपुत्रैश्च गर्हिताऽन्यैश्च निश्चितम् ॥१७॥
त्वया पृष्टा जगत्तात न लज्जा कथितुं मम । येषां भारैः पीडिताऽहं श्रूयतां कथयामि ते ॥१८॥
कृष्णभक्तिविहीना ये ये च तद्भक्तनिन्दकाः । तेषां महापातकिनामशक्ता भारवाहने ॥१९॥
स्वधर्माचारहीना ये नित्यकृत्यविवर्जिताः । श्रद्धाहीनाश्च वेदेषु तेषां भारेण पीडिता ॥२०॥

पितृमातृगुरुस्त्रीणां पोषणं पुत्रपोष्ययोः । ये न कुर्वन्ति तेषां च न शक्ता भारवाहने ॥२१॥
ये मिथ्यावादिनस्तात दयासत्य विवर्जिताः । निन्दका गुरुदेवानां तेषां भारेण पीडिता ॥२२॥
मित्रद्रोही कृतघ्नश्च मिथ्यासाक्ष्यप्रदायकः । विश्वासघ्नो न्यासहर्ता तेषां भारेण पीडिता ॥२३॥
कल्याणसूक्तसामानि हरेर्नामैकमङ्गलम् । कुर्वन्ति विक्रयं ये वै तेषां भारेण पीडिता ॥२४॥
जीवघाती गुरुद्रोही ग्रामयाजी च लुब्धकः । शवदाही शूद्रभोजी तेषां भारेण पीडिता ॥२५॥
पूजायज्ञोपवासादि व्रतानि विविधानि च । ये ये मूढा विहन्तारस्तेषां भारेण पीडिता ॥२६॥
सदा द्विषन्ति ये पापा गोविप्रसुरवैष्णवान् । हरिं हरिकथां भक्तिं तेषां भारेण पीडिता ॥२७॥
शङ्खादीनां च भारेण पीडिताऽहं यथा विधे । ततोऽधिकानां दैत्यानां भारेण परिपीडिता ॥२८॥
इत्येवं कथितं सर्वं मद्व्यथाया निवेदनम् । त्वया यदि सुपाल्याऽहं प्रतीकारं कुरु प्रभो ॥२९॥
इत्येवमुक्त्वा वसुधा रुरोद च मुहुर्मुहुः । ब्रह्मा तद्रोदनं दृष्ट्वा तामुवाच कृपानिधिः ॥३०॥
भारं तवापनेष्यामि दस्यूनामप्युपायतः । उपायतोऽपि कार्याणि सिद्ध्यन्त्येव वसुन्धरे ॥३१॥
कालेन भारहरणं करिष्यति मदीश्वरः । मन्त्रं मङ्गलकुम्भं च शिवलिङ्गं च कुङ्कुमम् ॥३२॥
मधुकाष्ठं चन्दनं च कस्तूरीं तीर्थमृत्तिकाम् । खड्गगण्डकखण्डं च स्फाटिकं पद्मरागकम् ॥३३॥
इन्द्रनीलं सूर्यमणिं रुद्राक्षं कुशमूलकम् । शालग्रामशिलां शङ्खं तुलसीं प्रतिमां जलम् ॥३४॥
शङ्खं प्रदीपमालां च शिलामर्च्यां च घण्टिकाम् । निर्माल्यं चैव नैवेद्यं हरिद्वर्णमणिं तथा ॥
ग्रन्थियुक्तं यज्ञसूत्रं दर्पणं श्वेतचामरम् ॥३५॥
गोरोचनं च मुक्तां च शुक्तिं माणिक्यमेव च । पुराणसंहितां वह्निं कर्पूरं परशुं तथा ॥३६॥
रजतं काञ्चनं चैव प्रवालं रत्नमेव च । कुशबीजं तीर्थतोयं गव्यं गोमूत्रगोमयम् ॥३७॥
त्वयि ये स्थापयिष्यन्ति मूढाश्चैतानि सुन्दरि । पच्यन्ते कालसूत्रेण वर्षाणामयुतं ध्रुवम् ॥३८॥
ब्रह्मा पृथ्वीं समाश्वास्य देवताभिस्तया सह । जगाम जगतां धाता कैलासं शङ्करालयम् ॥३९॥
गत्वा तमाश्रमं रम्यं ददर्श शङ्करं विधिः । वसन्तमक्षयवटमूले स्वःसरितस्तटे ॥४०॥
व्याघ्रचर्मपरीधानं दक्षकन्यास्थिभूषणम् । त्रिशूलपट्टिशधरं पञ्चवक्त्रं त्रिलोचनम् ॥४१॥
नानासिद्धैः परिवृतं योगीन्द्रगणसेवितम् । परितोऽप्सरसां नृत्यं पश्यन्तं सस्मितं मुदा ॥४२॥
गन्धर्वाणां च सङ्गीतं श्रुतवन्तं कुतूहलात् । पश्यन्तीं पार्वतीं प्रीत्या पश्यन्तं वक्रचक्षुषा ॥४३॥
जपन्तं पञ्चवक्त्रेण हरेर्नामैकमङ्गलम् । मन्दाकिनीपद्मबीजमालया पुलकाङ्कितम् ॥४४॥
एतस्मिन्नन्तरे ब्रह्मा तस्थावग्रे स धूर्जटेः । पृथिव्या सुरसङ्घैश्च सार्द्धं प्रणतकन्धरैः ॥४५॥
उत्तस्थौ शङ्करः शीघ्रं भक्त्या दृष्ट्वा जगद्गुरुम् । ननाम मूर्ध्ना संप्रीत्या लब्धवानाशिषं ततः ॥४६॥
प्रणेमुर्देवताः सर्वे शङ्करं चन्द्रशेखरम् । प्रणनाम धरा भक्त्या चाशिषं युयुजे हरः ॥४७॥
वृत्तान्तं कथयामास पार्वतीशं प्रजापतिः । श्रुत्वा नतमुखस्तूर्णं शङ्करो भक्तवत्सलः ॥४८॥
भक्तापायं समाकर्ण्य पार्वतीपरमेश्वरौ । बभूवतुस्तौ दुःखातौ बोधयामास तौ विधिः ॥४९॥
ततो ब्रह्मा महेशश्च सुरसङ्घान्वसुन्धराम् । गृहं प्रस्थापयामास समाश्वास्य प्रयत्नतः ॥५०॥
ततो देवेश्वरैस्तूर्णमागत्य धर्ममन्दिरम् । सह तेन समालोच्य प्रजग्मुर्भवनं हरेः ॥५१॥
वैकुण्ठं परमं धाम जरामृत्युहरं परम् । वायुना धार्यमाणं च ब्रह्माण्डादूर्ध्वमुत्तमम् ॥
कोटियोजनमूर्ध्वं च ब्रह्मलोकात्सनातनम् ॥५२॥
वर्णनीयं न कविभिर्विचित्रं रत्ननिर्मितम् । पद्मरागैरिन्द्रनीलै राजमार्गैर्विभूषितम् ॥५३॥
ते मनोयायिनः सर्वे संप्रापुस्तं मनोहरम् । हरेरन्तःपुरं गत्वा ददृशुः श्रीहरिं सुराः ॥५४॥
रत्नसिंहासनस्थं च रत्नालङ्कारभूषितम् । रत्नकेयूरवलयरत्ननूपुरशोभितम् ॥५५॥
रत्नकुण्डलयुग्मेन गण्डस्थलविराजितम् । पीतवस्त्रपरीधानं वनमालाविभूषितम् ॥५६॥
शान्तं सरस्वतीकान्तं लक्ष्मीधृतपदाम्बुजम् । कोटिकन्दर्पलीलाभं स्मितवक्त्रं चतुर्भुजम् ॥५७॥
सुनन्दनन्दकुमुदैः पार्षदैरुपसेवितम् । चन्दनोक्षितसर्वाङ्गं सुरत्नमुकुटोज्ज्वलम् ॥
परमानन्दरूपं च भक्तानुग्रहकारकम् ॥५८॥
तं प्रणेमुः सुरेन्द्राश्च भक्त्या ब्रह्मादयो मुने । तुष्टुवुः परया भक्त्या भक्तिनम्रात्मकन्धराः ॥
परमानन्दभारार्ताः पुलकाञ्चितविग्रहाः ॥५९॥
ब्रह्मोवाच ॥
नमामि कमलाकान्तं शान्तं सर्वेष्टमच्युतम् । वयं यस्य कलाभेदाः कलांशकलया सुराः ॥६०॥
मनवश्च मुनीन्द्राश्च मानुषाश्च चराचराः । कलाकलांशकलया भूतास्त्वत्तो निरञ्जन ॥६१॥
शङ्कर उवाच ॥
त्वामक्षयमक्षरं वा व्यक्तमव्यक्तमीश्वरम् । अनादिमादिमानन्दरूपिणं सर्वरूपिणम् ॥६२॥

अणिमादिकसिद्धीनां कारणं सर्वकारणम् । सिद्धिज्ञं सिद्धिदं सिद्धिरूपं कः स्तोतुमीश्वरः ॥६३॥
धर्म उवाच ॥
वेदे निरूपितं वस्तु वर्णनीयं विचक्षणैः । वेदे निर्वचनीयं यत्तन्निर्वक्तुं च कः क्षमः ॥
यस्य सम्भावनीयं यद्गुणरूपं निरञ्जनम् ॥६४॥
तदतिरिक्तं स्तवनं किमहं स्तौमि निर्गुणम् । ब्रह्मादीनामिदं स्तोत्रं षट्श्लोकोक्तं महामुने ॥६५॥
पठित्वा मुच्यते दुर्गाद्वाञ्छितं च लभेन्नरः । देवानां स्तवनं श्रुत्वा तानुवाच हरिः स्वयम् ॥६६॥
गोलोकं यात यूयं च यामि पश्चाच्छ्रिया सह । नरनारायणौ तौ द्वौ श्वेतद्वीपनिवासिनौ ॥६७॥
एते यास्यन्ति गोलोके तथा देवी सरस्वती । अनन्ता मम माया च कार्तिकेयो गणाधिपः ॥
सावित्री वेदमाता च पश्चाद्यास्यन्ति निश्चितम् ॥६८॥
तत्राहं द्विभुजः कृष्णो गोपीभी राधया सह । अत्राहं कमलायुक्तः सुनन्दादिभिरावृतः ॥६९॥
नारायणश्च कृष्णोऽहं श्वेतद्वीपनिवासकृत् । ममैवैताः कलाः सर्वे देवा ब्रह्मादयः स्मृताः ॥७०॥
कलाकलांशकलया सुरासुरनरादयः । गोलोकं यात यूयं च कार्यसिद्धिर्भविष्यति ॥७१॥
वयं पश्चाद्गमिष्यामः सर्वेषामिष्टसिद्धये । इत्युक्त्वा वै सभामध्ये विरराम हरिः स्वयम् ॥७२॥
प्रणम्य देवताः सर्वा जग्मुर्गोलोकमद्भुतम् । विचित्रं परमं धाम जरामृत्युहरं परम् ॥७३॥
ऊर्ध्वं वैकुण्ठतो गम्यं पञ्चाशत्कोटियोजनम् । वायुना धार्यमाणं च निर्मितं स्वेच्छया विभोः ॥७४॥
तमनिर्वचनीयं च देवास्ते गमनोत्सुकाः । ते मनोयायिनः सर्वे संप्रापुर्विरजातटम् ॥७५॥
दृष्ट्वा देवाः सरित्तीरं विस्मयं परमं ययुः । शुद्धस्फटिकसंकाशं सुविस्तीर्णं मनोहरम् ॥७६॥
मुक्तामाणिक्यपरममणिरत्नाकरान्वितम् । कृष्णशुभ्रहरिद्रक्तमणिराजिविराजितम् ॥७७॥
प्रवालाङ्कुरमुद्भूतं कुत्रचित्सुमनोहरम् । परमामूल्यसद्रत्नाकरराजिविभूषितम् ॥७८॥
विधेरदृश्यामाश्चर्यं निधिश्रेष्ठाकरान्वितम् । पद्मरागेन्द्रनीलानामाकरं कुत्रचिन्मुने ॥७९॥
कुत्रचिच्च मरकताकरश्रेणीसमन्वितम् । स्यमन्तकाकरं कुत्र कुत्रचिद्रुचकाकरम् ॥८०॥
अमूल्यपीतवर्णाभं मणिश्रेण्याकरान्वितम् । रत्नाकरं कुत्रचिच्च कुत्रचित्कौस्तुभाकरम् ॥८१॥
कुत्र निर्वचनीयानां मणीनामाकरं परम् । कुत्रचित्कुत्रचिद्रम्यविहारस्थलमुत्तमम् ॥८२॥
दृष्ट्वा तु परमाश्चर्यं जग्मुस्तत्पारमीश्वराः । ददृशुः पर्वतश्रेष्ठं शतशृङ्गं मनोरमम् ॥८३॥
पारिजाततरूणां च वनराजिविराजितम् । कल्पवृक्षैः परिवृतं वेष्टितं कामधेनुभिः ॥८४॥
कोटियोजनमूर्ध्वं च दैर्घ्यं दशगुणोत्तरम् । शैलप्रस्थपरिमितं पञ्चाशत्कोटियोजनम् ॥८५॥
प्राकाराकारमस्यैव शिखरे रासमण्डलम् । दशयोजनविस्तीर्णं वर्तुलाकारमुत्तमम् ॥८६॥
पुष्पोद्यानसहस्रेण पुष्पितेन सुगन्धिना । सङ्कुलेन मधुघ्राणां समूहेन समन्वितम् ॥८७॥
सुरत द्रव्यसंयुक्तै राजितं रतिमन्दिरैः । रत्नमण्डपकोटीनां सहस्रेण समन्वितम् ॥८८॥
रत्नसोपानयुक्तेन सद्रत्नकलशेन च । हरिन्मणीनां स्तम्भेन शोभितेन च शोभितम् ॥८९॥
सिंदूरवर्णमणिभिः परितः खचितेन च । इन्द्रनीलैर्मध्यगतैर्मण्डितेन मनोहरैः ॥९०॥
रत्नप्राकारसंयुक्तमणिभेदैर्विराजितम् । द्वारैः कपाटसंयुक्तैश्चतुर्भिश्च विराजितम् ॥९१॥
रज्जुग्रन्थिसमायुक्तरसालपल्लवान्वितैः । परितः कदलीस्तंभसमूहैश्च समन्वितम् ॥९२॥
शुक्लधान्यपर्णजालफलदूर्वाङ्कुरान्वितम् । चन्दनागरुकस्तूरीकुङ्कुमद्रवचर्चितम् ॥९३॥
वेष्टितं गोपकन्यानां समूहैः कोटिशो मुने । रत्नालङ्कारसंयुक्तै रत्नमालाविराजितैः ॥९४॥
रत्नकङ्कणकेयूर रत्ननूपुरभूषितैः । रत्नकुण्डलयुग्मेन गण्डस्थलविराजितैः ॥९५॥
रत्नाङ्गुलीयललितैर्हस्ताङ्गुलिविराजितैः । रत्नपाशकवृन्दैश्च विराजितपदाङ्गुलैः ॥९६॥
भूषितै रत्नभूषाभिः सद्रत्नमुकुटोज्वलैः । गजेन्द्रमुक्तालङ्कारैर्नासिकामध्यराजितैः ॥९७॥
सिन्दूरबिन्दुना सार्द्धमलकाधःस्थलोज्वलैः । चारुचम्पकवर्णाभैश्चन्दनद्रवचर्चितैः ॥९८॥
पीतवस्त्रपरीधानैर्बिम्बाधरमनोहरैः । शरत्पार्वणचन्द्राणां प्रभां मुष्णन्मुखोज्वलैः ॥९९॥
शरत्प्रफुल्लपद्मानां शोभामोषणलोचनैः । कस्तूरीपात्रिकायुक्तै रेखाक्तकज्जलोज्वलैः ॥१००॥
प्रफुल्लमालतीमालाजालैःकबरशोभितैः । मधुलुब्धमधुघ्राणां समूहैश्चापि सङ्कुलैः ॥
चारुणा गमनेनैव गजखञ्जनगञ्जनैः ॥१०१॥
वक्रभ्रूभङ्गसंयोगश्लक्ष्णस्मितसमन्वितैः । पक्वदाडिमबीजाभदन्तपङ्क्तिविराजितैः ॥१०२॥
खगेन्द्रचञ्चुशोभाढ्यनासिकोन्नतभूषितैः । गजेन्द्रगण्डयुग्माभस्तनभारनतैरिव ॥१०३॥
नितम्बकठिनश्रोणीपीनभारभरानतैः । कन्दर्पशरचेष्टाभिर्जर्जरीभूतमानसैः ॥१०४॥
दर्पणैः पूर्णचन्द्रास्यसौन्दर्यदर्शनोत्सुकैः । राधिकाचरणाम्भोजसेवासक्तमनोरथैः ॥१०५॥
सुन्दरीणां समूहैश्च रक्षितं राधिकाज्ञया । क्रीडासरोवराणां च लक्षैश्च परिवेष्टितम् ॥१०६॥

श्वेतरक्तैर्लोहितैश्च वेष्टितैः पद्मराजितैः । सुकूजद्भिर्मधुघ्राणां समूहैः सङ्कुलैः सदा ॥१०७॥
पुष्पोद्यानसहस्रेण पुष्पितेन समन्वितम् । कोटिकुञ्जकुटीरैश्च पुष्पशय्यासमन्वितैः ॥१०८॥
भोगद्रव्यसकर्पूरताम्बूलवस्त्रसंयुतैः । रत्नप्रदीपैः परितः श्वेतचामरदर्पणैः ॥१०९॥
विचित्रपुष्पमालाभिः शोभितैः शोभितं मुने । तं रासमण्डपं दृष्ट्वा जग्मुस्ते पर्वताद्बहिः ॥११०॥
ततो विचक्षणं रम्यं ददृशुः सुन्दरं वनम् । वनं वृदावनं नाम राधामाधवयोः प्रियम् ॥१११॥
क्रीडास्थानं तयोरेव कल्पवृक्षचयान्वितम् । विरजातीरनीराक्तैः कम्पितं मन्दवायुभिः ॥११२॥
कस्तूरीयुक्तपत्राब्जैः पुष्पौघैः सुरभीकृतम् । नवपल्लवसंसक्तपरपुष्टरुतैर्युतम् ॥११३॥
कुत्र हेलिकदम्बानां कदम्बैः कमनीयकम् । मन्दाराणां चम्पकानां चन्दनानां तथैव च ॥११४॥
सुगन्धिकुसुमानां च गन्धेन सुरभीकृतम् । आम्राणां नागरङ्गाणां पनसानां तथैव च ॥११५॥
तालानां नारिकेलानां वृन्दैर्वृन्दारकं वनम् । जम्बूनां बदरीणां च खर्जूराणां विशेषतः ॥११६॥
गुर्वाकाम्रातकानां च जम्बीराणां च नारद । कदलीनां श्रीफलानां दाडिमानां मनोहरैः ॥११७॥
सुपक्वफलसंयुक्तैः समूहैश्च विराजितम् । पिप्पलीनां च शालानामश्वत्थानां तथैव च ॥११८॥
निम्बानां शाल्मलीनां च तित्तिडीनां च शोभनैः । अन्येषां तरुभेदानां सङ्कुलैः सङ्कुलं सदा ॥११९॥
परितः कल्पवृक्षाणां वृन्दैर्वृन्दैर्विराजितम् । मल्लिकामालतीकुन्दकेतकीमाधवी लताः ॥१२०॥
एतासां च समूहैश्च यूथिकाभिः समन्वितम् । चारुकुञ्जकुटीरैस्तैः पञ्चाशत्कोटिभिर्मुने ॥१२१॥
रत्नप्रदीपदीपैश्च धूपेन सुरभीकृतैः । शृङ्गारद्रव्ययुक्तैश्च वासितैर्गन्धवायुभिः ॥१२२॥
चन्दनाक्तैः पुष्पतल्पैर्मालाजालसमन्वितैः । मधुलुब्धमधुघ्राणां कलशब्दैश्च शब्दितम् ॥१२३॥
रत्नालङ्कारशोभाढ्यैर्गोपीवृन्दैश्च वेष्टितम् । पञ्चाशत्कोटिगोपीभी रक्षितं राधिकाज्ञया ॥१२४॥
द्वात्रिंशत्काननं तत्र रम्यं रम्यं मनोहरम् । वृन्दावनाभ्यन्तरितं निर्जनस्थानमुत्तमम् ॥१२५॥
सुपक्वमधुरस्वादुफलैर्वृन्दारकं मुने । गोष्ठानां च गवां चैव समूहैश्च समन्वितम् ॥१२६॥
पुष्पोद्यानसहस्रेण पुष्पितेन सुगन्धिना । मधुलुब्धमधुघ्राणां समूहेन समन्वितम् ॥१२७॥
पञ्चाशत्कोटिगोपीनां विलासैश्च विराजितम् । श्रीकृष्णतुल्यरूपाणां सद्रत्नगुण्ठितैर्वरैः ॥१२८॥
दृष्ट्वा वृन्दावनं रम्यं ययुर्गोलोकमीश्वराः । परितो वर्तुलाकारं कोटियोजनविस्तृतम् ॥१२९॥
रत्नप्राकारसंयुक्तं चतुर्द्वारान्वितं मुने । गोपानां च समूहैश्च द्वारपालैः समन्वितम् ॥१३०॥
आश्रमै रत्नखचितैर्नानाभोगसमन्वितैः । गोपीनां कृष्णभृत्यानां पञ्चाशत्कोटिभिर्युतम् ॥१३१॥
भक्तानां गोपवृन्दानामाश्रमैः शतकोटिभिः । ततोऽधिकसुविस्तीर्णैः सद्रत्नग्रथितैर्युतम् ॥१३२॥
आश्रमैः पार्षदानां च ततोऽधिकविलक्षणैः । अमूल्यरत्नरचितैः संयुक्तं दशकोटिभिः ॥१३३॥
पार्षदप्रवराणां च श्रीकृष्णरूपधारिणाम् । आश्रमैः कोटिभिर्युक्तं सद्रत्नेन विनिर्मितैः ॥१३४॥
राधिकाशुद्धभक्तानां गोपीनामाश्रमैर्वरैः । सद्रत्नरचितैर्द्रव्यैर्द्वात्रिंशत्कोटिभिर्युतम् ॥१३५॥
तासां च किंकरीणां च भवनैः सुमनोहरैः । मणिरत्नादिरचितैः शोभितं दशकोटिभिः ॥१३६॥
शतजन्मतपःपूता भक्ता ये भारते भुवि । हरिभक्तिपरा ये च कर्मनिर्वाणकारकाः ॥१३७॥
स्वप्ने ज्ञाने हरेर्ध्याने विविष्टमानसा मुने । राधाकृष्णेति कृष्णेति प्रजपन्तो दिवानिशम् ॥१३८॥
तेषां श्रीकृष्णभक्तानां निवासैः सुमनोहरैः । सद्रत्नमणिनिर्माणैर्नानाभोगसमन्वितैः ॥१३९॥
पुष्पशय्यापुष्पमालाश्वेतचामरशोभितैः । रत्नदर्पणशोभाढ्यैर्हरिन्मणिसपर्पितैः ॥१४०॥
अमूल्यरत्नकलशसमूहान्वितशेखरैः । सूक्ष्मवस्त्राभ्यन्तरितैः संयुक्तं शतकोटिभिः ॥१४१॥
देवास्तमद्भुतं दृष्ट्वा कियद्दूरं ययुर्मुदा । तत्राक्षयवटं रम्यं ददृशुर्जगदीश्वराः ॥१४२॥
पञ्चयोजनविस्तीर्णमूर्ध्वं तद्द्विगुणं मुने । सहस्रस्कन्धसंयुक्तशाखासंस्थासमन्वितम् ॥१४३॥
रक्तपक्कफलाकीर्णं शोभितं रत्नवेदिभिः । कृष्णस्वरूपांस्तन्मूले ददृशुर्वल्लभाञ्छिशून् ॥१४४॥
पीतवस्त्रपरीधानान्क्रीडासक्तमनोहरान् । चन्दनोक्षितसर्वाङ्गान्रत्नभूषणभूषितान् ॥१४५॥
ददृशुस्तत्र देवेशाः पार्षदप्रवरान्हरेः। ततोऽविदूरे ददृशू राजमार्गं मनोहरम् ॥१४६॥
सिंदूराकारमणिभिः परितो रचितं मुने । इन्द्रनीलैः पद्मरागैर्हीरकै रुचकैस्तथा ॥१४७॥
निर्मितैर्वेदिभिर्युक्तं परितो रत्नमण्डपम् । चन्दनागुरुकस्तूरीकुङ्कुमद्रवचर्चितम् ॥१४८॥
दधिपूर्णलाजफलपुष्पदूर्वाङ्कुरान्वितम् । सूक्ष्मसूत्रग्रन्थियुक्तश्रीखण्डपल्लवान्वितम् ॥१४९॥
रम्भास्तम्भसमूहैश्च कुङ्कुमाक्तैर्विराजितम् । सद्रत्नमण्डलघटैः फलशाखासमन्वितैः ॥१५०॥
सिन्दूरकुङ्कुमाक्तैश्च गन्धचन्दनचर्चितैः । भूषितैः पुष्पमालाभिः पादपैः परिभूषितम् ॥१५१॥
गोपिकानां समूहैश्च क्रीडासक्तैश्च वेष्टितम् । बहुमूल्येन रत्नेन रत्नसोपाननिर्मितान् ॥१५२॥
वह्निशौचांशुकै रम्यैः श्वेतचामरदर्पणैः । रत्नतल्पविचित्रैश्च पुष्पमाल्यैर्विराजितान् ॥१५३॥
षोडशद्वारसंयुक्तान्द्वारपालैश्च रक्षितान् । परितः परिखायुक्तान्रत्नप्राकारवेष्टितान् ॥१६४॥

चन्दनागुरुकस्तूरीकुङ्कुमद्रवचर्चितान् । गृहान्मनोरमान्दृष्ट्वा ते देवा गमनोत्सुकाः ॥१५५॥
जग्मुः शीघ्रं कियद्दूरं ददृशुः सुन्दरं ततः । आश्रमं राधिकायाश्च रासेश्वर्याश्च नारद ॥१५६॥
देवाधिदेव्या गोपीनां वरायाश्चारुनिर्मितम् । प्राणाधिकायाः कृष्णस्य रम्यद्रव्यमनोहरम् ॥१५७॥
सर्वानिर्वचनीयं च पण्डितैर्न निरूपितम् । सुचारुवर्तुलाकारं षट्गव्यूतिप्रमाणकम् ॥१५८॥
शतमन्दिरसंयुक्तं ज्वलितं रत्नतेजसा । अमूल्यरत्नसाराणां चयौर्विरचितं वरम् ॥१५९॥
दुर्लङ्घ्याभिर्गभीराभिः परिखाभिः सुशोभितम् । कल्पवृक्षैः परिवृतं पुष्पोद्यानशतान्तरम् ॥१६०॥
सुमूल्यरत्नखचितप्राकारैः परिवेष्टितम् । सद्रत्नवेदिकायुक्तैर्युक्तं द्वारैश्च सप्तभिः ॥१६१॥
संयुक्तरत्नचित्रैश्च विचित्रैर्वर्तुलं मुने । प्रधानसप्तद्वारेभ्यः क्रमशः क्रमशो मुने ॥१६२॥
सर्वतोऽपि ततस्तत्र षोडशद्वारसंयुतम् । देवा दृष्ट्वा च प्राकारं सहस्रधनुरुच्छ्रितम् ॥१६३॥
सद्रत्नक्षुद्रकलशसमूहैः सुमनोहरैः । प्रदीप्तं तेजसा रम्यं परमं विस्मयं ययुः ॥१६४॥
ततः प्रदक्षिणीकृत्य कियद्दूरं ययुर्मुदा । पुरतो गच्छतां तेषां पश्चाद्भूतस्तदाश्रमः ॥१६५॥
गोपानां गोपिकानां च ददृशुश्चाश्रमान्परान् । अमूल्यरत्नरचिताञ्छतकोटिमितान्मुने ॥१६६॥
दर्शं दर्शं च परितो गोपानां सर्वमाश्रमम् । गोपिकानां चापरं वा रम्यं रम्यं नवंनवम् ॥१६७॥
गोलोकं निखिलं दृष्ट्वा पुलकाङ्गं ययुः सुराः । तदेव वर्तुलाकारं रम्यं वृन्दावनं वनम् ॥१६८॥
ददृशुः शतशृङ्गं च तद्बहिर्विरजानदीम् । विरजां तां ययुर्देवा ददृशुः शून्यमेव च ॥१६९॥
वाय्वाधारं च गोलोकं सद्रत्नमयमद्भुतम् । ईश्वरेच्छाविनिर्माणं राधिकाज्ञानुबन्धनात् ॥१७०॥
युक्तं सहस्रैः सरसां केवलं मङ्गलालयम् । नृत्यं च ददृशुस्तत्र देवाश्च सुमनोहरम् ॥१७१॥
सुतानं चारुसङ्गीतं राधाकृष्णगुणान्वितम् । श्रुत्वैव गीतपीयूषं मूर्छामापुः सुरा मुने ॥१७२॥
क्षणेन चेतनां प्राप्य ते देवाः कृष्णमानसाः । ददृशुः परमाश्चर्यं स्थानेस्थाने मनोहरम् ॥१७३॥
ददृशुर्गोपिकाः सर्वा नानावेषविधायिकाः । काश्चिन्मृदङ्गहस्ताश्च काश्चिद्वीणाकरा वराः ॥१७४॥
काश्चिच्चामरहस्ताश्च करतालकराः पराः । काश्चिद्यन्त्रवाद्यहस्ता रत्ननूपुरशोभिताः ॥१७५॥
सद्रत्नकिङ्किणीजालशब्देन शब्दिता वराः । काश्चिन्मस्तककुम्भाश्च नृत्यभेदमनोरथाः ॥१७६॥
पुंवेषनायिकाः काश्चित्काश्चित्तासां च नायिकाः । कृष्णवेषधराः काश्चिद्राधावेषधराः पराः ॥१७७॥
काश्चित्संयोगविरताः काश्चिदालिङ्गने रताः । क्रीडासक्ताश्च ता दृष्ट्वा सस्मिता जगदीश्वराः ॥१७८॥
प्रगच्छन्तः कियद्दूरं ददृशुश्चाश्रमान्बहून् । राधासखीनां गेहांश्च प्रधानानां च नारद ॥१७९॥
रूपेणैव गुणेनैव वेषेण यौवनेन च । सौभाग्येनैव वयसा सदृशीनां च तत्र वै ॥१८०॥
त्रयस्त्रिंशद्वयस्याश्च राधिकायाश्च गोपिकाः । वेषानिर्वचनीयाश्च तासां नामानि च शृणु ॥१८१॥
सुशीला च शशिकला यमुना माधवी रती । कदम्बमाला कुन्ती च जाह्नवी च स्वयंप्रभा ॥१८२॥
चन्द्रमुखी च सावित्री गायत्री सुमुखी सुखा । पद्मालया पारिजाता गौरी च सर्वमङ्गला ॥१८३॥
कालिका कमला दुर्गा भारती च सरस्वती । गङ्गाऽम्बिका मधुमती चम्पाऽपर्णा च सुन्दरी ॥१८४॥
कृष्णप्रिया सती चैव नन्दिनी नन्दनेति च । एताः समानाः सद्रत्नरचिता राधिकाप्रियाः ॥१८५॥
एतासां समरूपाणां रत्नधातुविचित्रितान् । नानाप्रकारचित्रेण चित्रितान्सुमनोहरान् ॥१८६॥
अमूल्यरत्नकलशसमूहैः शिखरोज्ज्वलान् । सद्रत्नरचिताञ्छुभ्रानाश्रमान्ददृशुस्तथा ॥१८७॥
ब्रह्माण्डाद्बहिरूर्ध्वं च नास्ति लोकस्तदूर्ध्वकः । ऊर्ध्वं शून्यमयं सर्वं तदन्ता सृष्टिरेव च ॥१८८॥
रसातलेभ्यः सप्तभ्यो नास्त्यधः सृष्टिरेव च । तदधश्च जलं ध्वान्तमगन्तव्यमदृश्यकम् ॥
ब्रह्माण्डान्तं तद्बहिश्च सर्वं मत्तो निशामय ॥१८९॥

इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवादे गोलोकवर्णनं नाम चतुर्थोऽध्यायः ॥४॥

आदितः श्लोकानां समष्ट्यङ्काः-९,९७६+१८९=१०,१६५



## ॥ अथ पञ्चमोऽध्यायः ॥

श्रीनारायण उवाच ॥

गोलोकं निखिलं दृष्ट्वा देवास्ते हृष्टमानसाः । पुनराजग्मू राधायाः प्रधानद्वारमेव च ॥१॥
सद्रत्नमणिनिर्माणं वेदिकायुग्मसंयुतम् । हरिद्राकारमणिना वज्रसंमिश्रितेन च ॥२॥
अमूल्यरत्नरचितकपाटेन विभूषितम् । द्वारे नियुक्तं ददृशुर्वीरभानुमनुत्तमम् ॥३॥
रत्नसिंहासनस्थं च रत्नाभरणभूषितम् । पीतवस्त्रपरीधानं सद्रत्नमुकुटोज्ज्वलम् ॥४॥
द्वारं चित्रविचित्रेण विचित्रं परमाद्भुतम् । सर्वं निवेदनं चक्रुर्देवा दौवारिकं मुदा ॥५॥
तानुवाच द्वारपालो निःशङ्कं त्रिदशेश्वरान् । नाहं विनाऽऽज्ञया गन्तुं दातुं सांप्रतमीश्वरः ॥६॥

किङ्करान्प्रेषयामास श्रीकृष्णस्थानमेव च । हरेरनुज्ञां संप्राप्य ददौ गन्तुं सुरान्मुने ॥७॥
तं संभाष्य ययुर्देवा द्वितीयं द्वारमुत्तमम् । ततोऽधिकं विचित्रं च सुन्दरं सुमनोहरम् ॥८॥
द्वारे नियुक्तं ददृशुश्चन्द्रभानुं च नारद । किशोरं श्यामलं चारु स्वर्णवित्रधरं वरम् ॥९॥
रत्नसिंहासनस्थं च रत्नभूषणभूषितम् । गोपानां च समूहेन पञ्चलक्षेण शोभितम् ॥१०॥
तं संभाष्य ययुर्देवास्तृतीयं द्वारमुत्तमम् । ततोऽतिसुन्दरं चित्रं ज्वलन्तं मणितेजसा ॥११॥
द्वारे नियुक्तं ददृशुः सूर्यभानुं च नारद । द्विभुजं मुरलीहस्तं किशोरं श्यामसुन्दरम् ॥१२॥
मणिकुण्डलयुग्मेन कपोलस्थलराजितम् । रत्नदण्डकरं श्रेष्ठं प्रेष्यं राधेशयोः परम् ॥१३॥
नवलक्षेण गोपानां वेष्टितं च नृपेन्द्रवत् । तं संभाष्य ययुर्देवाश्चतुर्थं द्वारमेव च ॥१४॥
तेभ्यो विलक्षणं रम्यं सुदीप्तं मणितेजसा । अत्यद्भुतविचित्रेण भूषितं सुमनोहरम् ॥१५॥
द्वारे नियुक्तं ददृशुर्वसुभानुं व्रजेश्वरम् । किशोरं सुन्दरवरं मणिदण्डकरं परम् ॥१६॥
रत्नसिंहासनस्थं च रत्नभूषणभूषितम् । पक्वबिंबाधरोष्ठं च सस्मितं सुमनोहरम् ॥१७॥
तं संभाष्य ययुर्देवा पञ्चमं द्वारमेव च । वज्रभित्तिस्थितैश्चित्रविचित्रैर्ज्वलितं परम् ॥१८॥
द्वारपालं च ददृशुर्देवभानुं च तत्र वै । चारु सिंहासनस्थं च रत्नभूषणभूषितम् ॥१९॥
मयूरपिच्छचूडं च रत्नमालाविभूषितम् । कदम्बपुष्पसंसक्तसद्रत्नकुण्डलोज्ज्वलम् ॥२०॥
चन्दनागुरुकस्तूरीकुङ्कुमद्रवचर्चितम् । नृपेन्द्रवरतुल्यं च दशलक्षप्रजान्वितम् ॥२१॥
तं वेत्रपाणिं संभाष्य ययुर्देवा मुदाऽन्विताः । विलक्षणं द्वारषट् कं चित्रराजिविराजितम् ॥२२॥
वज्रभित्तियुग्मयुक्ते पुष्पमाल्यविभूषिते । द्वारे नियुक्तं ददृशुः शुक्रभानुं व्रजेश्वरम् ॥२३॥
नानालङ्कारशोभाढ्यं दशलक्षप्रजान्वितम् । श्रीखण्डपल्लवासक्तकपोलं कुण्डलोज्ज्वलम् ॥२४॥
तूर्णं सुरास्तं सभाष्य ययुर्द्वारं च सप्तमम् । नानाप्रकारचित्रं च षड्भ्यश्चातिविलक्षणम् ॥२५॥
द्वारे नियुक्तं ददृशू रत्नभानुं हरेः प्रियम् । चन्दनोक्षितसर्वाङ्गं पुष्पमालाविभूषितम् ॥
भूषितं भूषणै रम्यैर्मणिरत्नमनोहरैः ॥२६॥
गोपैर्द्वादशलक्षैश्च राजेन्द्रमिव राजितम् । रत्नसिंहासनस्थं च स्मेराननसरोरुहम् ॥२७॥
तं वेत्रहस्तं संभाष्य जग्मुर्देवेश्वरा मुदा । विचित्रमष्टमं द्वारं सप्तभ्योऽपि विलक्षणम् ॥२८॥
दौवारिकं ते ददृशुः सुपार्श्वं सुमनोहरम् । सस्मितं सुन्दरवरं श्रीखण्डतिलकोज्ज्वलम् ॥२९॥
बन्धुजीवाधरोष्ठं च रत्नकुण्डलमण्डितम् । सर्वालङ्कारशोभाढ्यं रत्नदण्डधरं वरम् ॥३०॥
गोपैर्द्वादशलक्षैश्च किशोरैश्च समन्वितम् । ततः शीघ्रं ययुर्देवा नवमं द्वारमीप्सितम् ॥३१॥
वज्रसद्रत्नरचितं चतुर्वेदिसमन्वितम् । अपूर्वचित्ररचितमालजालैर्विराजितम् ॥३२॥
द्वारपालं च ददृशुः सुबलं ललिताकृतिम् । नानाभूषणशोभाढ्यं भूषणार्हं मनोहरम् ॥३३॥
वज्रैर्द्वादशलक्षैश्च संयुक्तं सुमनोहरम् । तं दण्डहस्तं सम्भाष्य सुरा द्वारातरं ययुः ॥३४॥
विशिष्टं दशमं द्वारं दृष्ट्वा ते विस्मयं ययुः । सर्वानिर्वचनीयं चाप्यदृष्टमश्रुतं मुने ॥३५॥
ददृशुर्द्वारपालं च सुदामानं च सुन्दरम् । अनिवर्चनीयरूपं कृष्णतुल्यं मनोहरम् ॥३६॥
गोपविंशतिलक्षाणां समूहैः परिवारितम् । तं दण्डहस्तं दृष्ट्वैव जग्मुर्द्वारान्तरं सुराः ॥३७॥
द्वारमेकादशाख्यं च सुचित्रं महदद्भुतम् । द्वारपालं च तत्रस्थं श्रीदामानं व्रजेश्वरम् ॥३८॥
राधिकापुत्रतुल्यं च पीतवस्त्रेण भूषितम् । अमूल्यरत्नरचितरत्नसिंहासनस्थितम् ॥३९॥
अमूल्यरत्नभूषाभिर्भूषितं सुमनोहरम् । चन्दनागुरुकस्तूरीकुङ्कुमेन विराजितम् ॥४०॥
गण्डस्थलकपोलार्हसद्रत्नकुण्डलोज्ज्वलम् । सद्रत्नश्रेष्ठरचितविचित्रमुकुटोज्ज्वलम् ॥४१॥
प्रफुल्लमालतीमालाजालैः सर्वाङ्गभूषितम् । कोटिगोपैः परिवृतं राजेन्द्राधिकमुज्ज्वलम् ॥४२॥
तं संभाष्य ययुर्द्वारं द्वादशाख्यं सुरा मुदा । अमूल्यरत्नरचितवेदिकाभिः समन्वितम् ॥४३॥
सर्वेषां दुर्लभं चित्रमदृश्यमश्रुतं मुने । वज्रभित्तिस्थितं चित्रं सुन्दरं सुमनोहरम् ॥४४॥
द्वारे नियुक्ता ददृशुर्देवा गोपाङ्गना वराः । नवयौवनसंपन्ना रत्नाभरणभूषिताः ॥४५॥
पीतवस्त्रपरीधानाः कबरीभारभूषिताः । सुगन्धिमालतीमाला जालैः सर्वाङ्गभूषिताः ॥४६॥
रत्नकङ्कणकेयूररत्ननूपुरभूषिताः । रत्नकुण्डलयुग्मेन गण्डस्थलविराजिताः ॥४७॥
चन्दनागुरु कस्तूरीकुङ्कुमद्रवचर्चिताः । पीनश्रोणीभरानम्रा नितम्बाभारपीडिताः ॥४८॥
गोपीनां शतकोटीनां श्रेष्ठाः प्रेष्ठा हरेरपि । गोपीश्च कोटिशो दृष्ट्वा सुरास्ते विस्मयं ययुः ॥४९॥
संभाष्य ता मुदा युक्ता ययुर्द्वारातरं मुने । ततश्च क्रमशो विप्र त्रिषु द्वारेषु तत्र वै ॥५०॥
गोपाङ्गनानां श्रेष्ठाश्च ददृशुः सुमनोहराः । वराणां च वरा रम्या धन्या मान्याश्च शोभनाः ॥५१॥
सर्वाः सौभाग्ययुक्ताश्च राधिकायाः प्रियाश्च ताः । भूषिता भूषणै रम्यैः प्रोद्भिन्नवयौवनाः ॥५२॥
एवं द्वारत्रयं दृष्ट्वा स्वप्ना ज्ञानाद्भुताश्रुतम् । अदृश्यमतिरम्यं चाप्यनिरूप्यं विचक्षणैः ॥५३॥

भक्त्या निवेदितमिदं गृह्यतां परमेश्वर । चन्दनागुरु कस्तूरीकुङ्कुमद्रवसंयुतम् ॥३६॥
अबीरचूर्णं रुचिरं गृह्यतां परमेश्वर । तरुभेदरसोत्कर्षो गन्धयुक्तोऽग्निना सह ॥३७॥
सुप्रियः सर्वदेवानां धूपोऽयं गृह्यतां हरे । घोरान्धकारनाशैकहेतुरेव शुभावहः ॥३८॥
सुप्रदीपो दीप्तिकरो दीपोऽयं गृह्यतां हरे । पवित्रं निर्मलं तोयं कर्पूरादिसमायुतम् ॥३९॥
जीवनं सर्वबीजानां पानार्थं गृह्यतां हरे । नानापुष्पसमायुक्तं ग्रथितं सूक्ष्मतन्तुना ॥४०॥
शरीरभूषणवरं माल्यं च प्रतिगृह्यताम् । दत्त्वा देयानि द्रव्याणि पूजोपयोगितानि च ॥४१॥
व्रतस्थानस्थितं द्रव्यं हरये देयमेव च । फलानि तरुबीजानि स्वादूनि सुन्दराणि च ॥४२॥
वंशवृद्धिकराण्येव गृह्यतां परमेश्वर । आवाहितांश्च देवांश्च प्रत्येकं पूजयेद्व्रती ॥४३॥
तान्पूज्य भक्तिभावेन दद्यात्पुष्पाञ्जलित्रयम् । सुनन्दनन्दकुमुदान्गोपान्गोपीश्च राधिकाम् ॥४४॥
गणेशं कार्तिकेयं च ब्रह्माणं च शिवं शिवाम् । लक्ष्मीं सरस्वतीं चैव दिक्पालांश्च ग्रहांस्तथा ॥४५॥
शेषं सुदर्शनं चैव पार्षदप्रवरांस्तथा । सम्पूज्य सर्वदेवांश्च प्रणम्य दण्डवद्भुवि ॥
ब्राह्मणेभ्यश्च नैवेद्यं दत्त्वा दद्याच्च दक्षिणाम् ॥४६॥
कथां च जन्माध्यायोक्तां शृणुयाद्भक्ति भावतः । तदा कुशासने स्थित्वा कुर्याज्जागरणं व्रती ॥४७॥
प्रभाते चाह्निकं कृत्वा संपूज्य श्रीहरिं मुदा । ब्राह्मणान्भोजयित्वा च कारयेद्धरिकीर्तनम् ॥४८॥
नारद उवाच ॥
व्रतकालव्यवस्थां च वेदोक्तां सर्वसंमताम् । वेदार्थं च समालोच्य संहितां च पुरातनीम् ॥४९॥
उपवासे जागरणे व्रते किं वा फलं मुने । किं वा पापं तत्र भुक्त्वा वद वेदविदां वर ॥५०॥
श्रीनारायण उवाच ॥
अष्टमी कर्क्षसंयुक्ता रात्र्यर्थे यदि दृश्यते । स एव मुख्यकालश्च तत्र जातः स्वयं हरिः ॥५१॥
जयं पुण्यं च कुरुते जयन्ती तेन संस्मृता । तत्रोपोष्य व्रतं कृत्वा कुर्याज्जागरणं बुधः ॥५२॥
सर्वापवादः कालोऽयं प्रधानः सर्वसंमतः । इति वेदविदां वाणी चेत्युक्ता वेधसा पुरा ॥५३॥
तत्र जागरणं कृत्वा यश्चोपोष्य व्रतं चरेत् । कोटिजन्मार्जितात्पापान्मुच्यते नात्र संशयः ॥५४॥
वर्जनीया प्रयत्नेन सप्तमीसहिताष्टमी । सा सर्क्षापि न कर्तव्या सप्तमीसहिताष्टमी ॥
अविद्धायां कऋक्षायां जातो देवकिनन्दनः ॥५५॥
वेदवेदाङ्गगुप्तेतिविशिष्टं मङ्गलक्षणे । व्यतीते रोहिणीऋक्षे व्रती कुर्याच्च पारणाम् ॥५६॥
तिथ्यन्ते च हरिं स्मृत्वा कृत्वा देवार्चनं व्रती। पारणं पावनं पुंसां सर्वपापप्रणाशनम् ॥५७॥
उपवासाङ्गभूतं च फलदं सिद्धिकारणम् । सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते ॥५८॥
अन्यथा फलहानिः स्यात्कृते धारणपारणे । न रात्रौ पारणं कुर्यादृते वै रोहिणीव्रतात् ॥५९॥
निशायां पारणं कुर्याद्वर्जयित्वा महानिशाम् । पूर्वाह्णे पारणं शस्तं कृत्वा विप्रसुरार्चनम् ॥६०॥
सर्वेषां संमतं कुर्यादृते वै रोहिणी व्रतम् । बुधसोमसमायुक्ता जयन्ती यदि लभ्यते ॥६१॥
न कुर्याद्गर्भवासं च तत्र कृत्वा व्रतं व्रती । उदये चाष्टमी किञ्चिन्नवमी सकला यदि ॥६२॥
भवेद्बुधेन्दुसंयुक्ता प्राजापत्यर्क्षसंयुता । अपिवर्षशतेनापि लभ्यते वा न लभ्यते ॥६३॥
व्रतं तत्र व्रती कुर्यात्पुंसां कोटिं समुद्धरेत् । नृणां विना व्रतेनापि भक्तानां हीनसंपदाम् ॥६४॥
कृतेनैवोपवासेन प्रीतो भवति माधवः । भक्त्या नानोपचारेण रात्रौ जागरणेन च ॥६५॥
फलं ददाति दैत्यारिर्जयन्तीव्रतसंभवम् । वित्तशाठ्यमकुर्वाणः सम्यक्फलमवाप्नुयात् ॥६६॥
कुर्वाणो वित्तशाठ्यं च लभते सदृशं फलम् । अष्टम्यामथ रोहिण्यां न कुर्यात्पारणं बुधः ॥६७॥
हन्यात्पुराकृतं पुण्यं चोपवासार्जितं फलम् । तिथिरष्टगुणं हन्ति नक्षत्रं च चतुर्गुणम् ॥६८॥
तस्मात्प्रयत्नतः कुर्यात्तिथिभान्ते च पारणम् । महानिशायां प्राप्तायां तिथिभान्तं यदा भवेत् ॥६९॥
तृतीयेऽह्नि मुनिश्रेष्ठ पारणं कुरुते बुधः । षण्मुहूर्ते व्यतीते तु रात्रावेव महानिशा ॥७०॥
लभते ब्रह्महत्यां च तत्र भुक्त्वा च नारद । गोमांसविण्मूत्रसमं ताम्बूलं च फलं जलम् ॥७१॥
पुंसामभक्ष्यं शुद्धानामोदनस्य च का कथा । त्रियामां रजनी प्राहुस्त्यक्त्वाद्य च चतुष्टयम् ॥७२॥
नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते । जन्माष्टम्यां च शुद्धायां कृत्वा जागरणं व्रतम् ॥७३॥
शतजन्मकृतात्पापान्मुच्यते नात्र संशयः । जन्माष्टम्यां च शुद्धायामुपोष्य केवलं नरः ॥७४॥
अश्वमेधफलं तस्य व्रतं जागरणं विना । यद्बाल्ये यच्च कौमारे यौवने यच्च वार्धके ॥७५॥
सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः । श्रीकृष्णजन्मदिवसे यश्च भुक्तं नराधमः ॥७६॥
स भवेन्मातृगामी च ब्रह्महत्याशतं लभेत् । कोटिजन्मार्जितं पुण्यं तस्य नश्यति निश्चितम् ॥७७॥
अनर्हश्चाशुचिः शश्वद्दैवे पित्र्ये च कर्मणि । अन्ते वसेत्कालसूत्रे यावच्चन्द्रदिवाकरौ ॥७८॥
कृमिभिः शूलतुल्यैश्च तीक्ष्णदंष्ट्रैश्च भक्षितः । पापी ततः समुत्थाय भारते जन्म चेल्लभेत् ॥७९॥

षष्टिवर्षसहस्राणि विष्ठायां च कृमिर्भवेत् । गृध्रकोटिसहस्राणि शतजन्मानि सूकरः ॥८०॥
श्वापदः शतजन्मानि सृगालः सप्त जन्म च । सप्तजन्मसु सर्पश्च काकश्च सप्तजन्मसु ॥८१॥
ततो भवेन्नरो मूको गलत्कुष्ठी सदातुरः । ततो भवेत्पशुघ्नश्च व्यालग्राही ततो भवेत् ॥८२॥
तदन्ते च भवेद्दस्युर्धर्महीनश्च गृध्रकः । ततो भवेत्स रजकस्तैलकारस्ततो भवेत् ॥८३॥
ततो भवेद्देवलको ब्राह्मणश्च सदाऽशुचिः । उपवासासमर्थश्चेदेकं विप्रं च भोजयेत् ॥८४॥
तावद्धनानि वा दद्याद्यद्धुक्तं द्विगुणं भवेत् । सहस्रसंमितां देवीं जपेद्वा प्राणसंयमान् ॥८५॥
कुर्याद्द्वादशसंख्याकान्यथार्थं तद्व्रते नरः । इत्येवं कथितं वत्स श्रुतं यद्धर्मवक्त्रतः ॥
व्रतोपवासपूजानां विधानमकृते च यत् ॥८६॥

इति श्रीब्रह्मवैवर्ते महापुराणे नारायणनारदसंवादे श्रीकृष्णजन्मखण्डे
कृष्णजन्माष्टमीव्रतपूजोपवासनिरूपणं नामाष्टमोऽध्यायः ॥८॥
आदितः श्लोकानां समष्टयङ्काः-१०,७०१+८६=१०,७८७



## ॥ अथ नवमोऽध्यायः ॥

नारद उवाच ॥
संस्थाप्य गोकुले कृष्णं यशोदामन्दिरं वसुः । जगाम स्वगृहं नन्दः किञ्चकार महां प्रभुः ॥१॥
किञ्चकार हरिस्तत्र कतिवर्षस्थितिः प्रभोः । बालक्रीडनकं तस्य वर्णय क्रमशो मुने ॥२॥
पुरा कृता या प्रतिज्ञा गोलोके राधया सह । तत्कृतं केन विधिना प्रतिज्ञापालनं हरेः ॥३॥
कीदृग्वृन्दावनं नाम मण्डलं किंविधं वद । रासक्रीडां जलक्रीडां संव्यस्य वर्णय प्रभो ॥४॥
नन्दस्तपः किञ्चकार यशोदा चाथ रोहिणी । हरेः पूर्वं च हलिनः कुत्र जन्म बभूव ह ॥५॥
पीयूषखण्डमाख्यानमपूर्वं श्रीहरेः स्मृतम् । विशेषतः कविमुखान्नव्यं नूनं पदे पदे ॥६॥
स्वरासमण्डलक्रीडां वर्णय स्वयमेव च । परोक्षवर्णनात्काव्यं प्रशस्तं नव्यवर्णनम् ॥७॥
श्रीकृष्णांशो भवान्साक्षाद्योगीन्द्राणां गुरोर्गुरुः । यो यस्यांशः स च जनस्तस्यैव सुखतः सुखी ॥८॥
त्वयैव वर्णितौ पादौ विलीनौ तु युवां हरेः । साक्षाद्गोलोकनाथांशस्त्वमेव तत्समो महान् ॥९॥
नारायण उवाच ॥
ब्रह्मेशशेषविघ्नेशाः कूर्मो धर्मोऽहमेव च । नरश्च कार्तिकेयश्च श्रीकृष्णांशा वयं नव ॥१०॥
अहो गोलोकनाथस्य महिमा केन वर्ण्यते । यं स्वयं नो विजानीमो न वेदाः किं विपश्चितः ॥११॥
सूकरो वामनः कल्किबौद्धः कपिलमीनकौ । एते चांशाः कलाश्चान्ये संत्येव कतिधा मुने ॥१२॥
कूर्मो नृसिंहो रामश्च श्वेतद्वीपविराड्विभुः । परिपूर्णतमः कृष्णो वैकुण्ठे गोकुले स्वयम् ॥१३॥
वैकुण्ठे कमलाकान्तो रूपभेदाच्चतुर्भुजः । गोलोके गोकुले राधाकान्तोऽयं द्विभुजः स्वयम् ॥१४॥
अस्यैव तेजो नित्यं च चित्ते कुर्वन्ति योगिनः । भक्ताः पादाम्बुजं तेजः कुतस्तेजस्विनं विना ॥१५॥
शृणु विप्र वर्णयामि यशोदानन्दयोस्तपः । रोहिण्याश्च यतो हेतोर्ददृशुस्ते हरेर्मुखम् ॥१६॥
वसूनां प्रवरो नन्दो नाम्ना द्रोणस्तपोधनः । तस्य पत्नी धरा साध्वी यशोदा सा तपस्विनी ॥१७॥
रोहिणी सर्पमाता च कद्रूश्च सर्पकारिणी । एतेषां जन्मचरितं निबोध कथयामि ते ॥१८॥
एकदा च धरा द्रोणौ पर्वते गन्धमादने । पुण्यदे भारते वर्षे गौतमाश्रमसन्निधौ ॥१९॥
चक्रतुश्च तपस्तत्र वर्षाणामयुतं मुने । श्रीकृष्णदर्शनार्थं च निर्जने सुप्रभातटे ॥२०॥
न ददर्श हरिं द्रोणो धरा चैव तपस्विनी । कृत्वाग्निकुण्डं वैराग्यात्प्रवेष्टुं समुपस्थितौ ॥२१॥
तौ मर्तुकामौ दृष्ट्वा च वाग्बभूवाशरीरिणी । द्रक्ष्यथः श्रीहरिं पृथ्व्यां गोकुले पुत्ररूपिणम् ॥२२॥
जन्मान्तरे वसुश्रेष्ठ दुर्दर्शं योगिनां विभुम् । ध्यानासाध्यं च विदुषां ब्रह्मादीनां च वन्दितम् ॥२३॥
श्रुत्वैवं तद्धराद्रोणौ जग्मतुः स्वालयं सुखात् । लब्ध्वा तु भारते जन्म दृष्टं ताभ्यां हरेर्मुखम् ॥२४॥
यशोदानन्दयोरेवं कथितं चरितं तव । सुगोप्यं त्रिदशानां च रोहिणीचरितं शृणु ॥२५॥
एकदा देवमाता च पुष्पोत्सवदिने सती । विज्ञापनं चरद्वारा चकार कश्यपं मुने ॥२६॥
सुस्नाता सुन्दरी देवी रत्नालङ्कार भूषिता । चकार वेषं विविधं ददर्श दर्पणे मुखम् ॥२७॥
कस्तूरीबिन्दुना सार्द्धं सिन्दूरबिन्दुसंयुतम् । रत्नकुण्डलशोभाढ्यं पत्राभरणभूषितम् ॥२८॥
गजमौक्तिकसंयुक्तं नासाग्रं सुमनोहरम् । शरत्पार्वणचन्द्रास्यं शरत्पङ्कजलोचनम् ॥२९॥
वक्रभ्रूभङ्गिना युक्तं विचित्रकज्जलोज्वलम् । पक्वदाडिमबीजाभदन्तपङ्क्तिविराजितम् ॥३०॥
पक्वबिम्बाधरौष्ठं च सस्मितं सुन्दरं सदा । अतीव कमनीयं च मुनीन्द्रचित्तमोहनम् ॥३१॥
एवंभूतं मुखं दृष्ट्वा सुन्दरी स्वगृहे स्थिता । पश्यन्ती पतिमार्गं च कामबाणप्रपीडिता ॥३२॥

शुश्राव वार्तामदितिः कश्यपं कद्रुसंयुतम् । रत्नसारसमारम्भे तस्या वक्षस्थले स्थितम् ॥३३॥
श्रुत्वा चुकोप साध्वी सा हताशा रतिकातरा । न शशाप पतिं प्रेम्णा शशाप सर्पमातरम् ॥३४॥
न देवालययोग्या सा धर्मिष्ठा धर्मनाशिनी । दूरं गच्छतु स्वर्लोकादात्मयोनिं च मानवीम् ॥३५॥
श्रुत्वैवं सा चरद्वारा शशाप देवमातरम् । सा चैवं मानवीं योनिं यातु मर्त्ये जरायुताम् ॥३६॥
कश्यपो बोधयामास कद्रुं च सर्पमातरम् । काले यास्यसि मर्त्यं च मया सह शुचिस्मिते ॥३७॥
त्यज भीतिं लभ सुखं द्रक्ष्यसि श्रीहरेर्मुखम् । एवमुक्त्वा कश्यपश्च जगाम चादितेर्गृहम् ॥३८॥
वाञ्छां पूर्णां च तस्याश्च चकार भगवान्विभुः । ऋतौ तत्र महेन्द्रश्च बभूव च सुरर्षभः ॥३९॥
अदितिर्देवकी चैव सर्पमाता च रोहिणी । कश्यपो वसुदेवश्च श्रीकृष्णजनको महान् ॥४०॥
रहस्यं गोपनीयं च सर्वं निगदितं मुने । अधुना बलदेवस्य जन्माख्यानं मुने शृणु ॥४१॥
अनन्तस्याप्रमेयस्य सहस्रशिरसः प्रभोः । रोहिणी वसुदेवस्य भार्यारत्नं च प्रेयसी ॥४२॥
जगाम गोकुलं साध्वी वसुदेवाज्ञया मुने । सङ्कर्षणस्य रक्षार्थं कंसभीता पलायिता ॥४३॥
देवक्याः सप्तमं गर्भं माया कृष्णाज्ञया तदा । रोहिण्या जठरे तत्र स्थापयामास गोकुले ॥४४॥
संस्थाप्य च तदा गर्भं कैलासं सा जगाम ह । दिनान्तरे कतिपये रोहिणी नन्दमन्दिरे ॥४५॥
सुषाव पुत्रं कृष्णांशं तप्तरौप्याभमीश्वरम् । ईषद्धास्यं प्रसन्नास्यं ज्वलन्तं ब्रह्मतेजसा ॥४६॥
तस्यैव जन्ममात्रेण देवा मुमुदिरे तदा । स्वर्गे दुन्दुभयो नेदुरानका मुरजादयः ॥४७॥
जयशब्दं शङ्खशब्दं चक्रुर्देवा मुदान्विताः । नन्दो हृष्टो ब्राह्मणेभ्यो धनं बहुविधं ददौ ॥४८॥
चिच्छेद नाडीं धात्री च स्नापयामास बालकम् । जयशब्दं जगुर्गोप्यः सर्वाभरणभूषिताः ॥४९॥
परपुत्रोत्सवं नन्दश्चकार परमादरात् । तदा यशोदा गोपीभ्यो ब्राह्मणेभ्यो ददौ मुदा ॥५०॥
धनानि नानावस्तूनि तैलं सिन्दूरमेव च । इत्येवं कथितं वत्स यशोदानन्दयोस्तपः ॥५१॥
जन्माख्यानं च हलिनो रोहिणीचरितं तथा । अधुना ते वाञ्छनीयं नन्दपुत्रोत्सवं शृणु ॥५२॥
सुखदं मोक्षदं सारं जन्ममृत्युजरापहम् । मङ्गलं कृष्णचरितं वैष्णवानां च जीवनम् ॥५३॥
सर्वाशुभविनाशं च भक्तिदास्यप्रदं हरेः । श्रीकृष्णं वसुदेवश्च संस्थाप्य नन्दमन्दिरे ॥५४॥
गृहीत्वा बालिकां हृष्टो जगाम निजमन्दिरम् । कथितं चरितं तस्याः श्रुतं संमुखतो मुने ॥५५॥
अधुना गोकुले कृष्णचरितं शृणु मङ्गलम् । वसुदेवे गृहं याते यशोदा नन्द एव च ॥५६॥
मङ्गले सूतिकागारे जयागारे जयान्विते । ददर्श पुत्रं भूमिस्थं नवीननीरदप्रभम् ॥५७॥
अतीव सुन्दरं नग्नं पश्यन्तं गृहशेखरम् । शरत्पार्वणचन्द्रास्यं नीलेन्दीवरलोचनम् ॥५८॥
रुदन्तं च हसन्तं च वेणुसंसक्तविग्रहम् । हस्तद्वयं सुविन्यस्तं प्रेमवन्तं पदाम्बुजम् ॥५९॥
दृष्ट्वा नन्दः स्त्रिया सार्द्धं हरिं हृष्टो बभूव ह । धात्री तं स्नापयामास शीततोयेन बालकम् ॥६०॥
चिच्छेद नाडीं बालस्य हर्षाद्गोप्यो जयं ददुः । आजग्मुर्गोपिकाः सर्वा बृहच्छ्रोण्यश्चलत्कुचाः ॥६१॥
बालिकाश्च वयस्यश्च विप्रपत्न्यश्च सूतिकाम् । आशिषं युयुजुः सर्वा ददृशुर्बालकं मुदा ॥६२॥
क्रोडे चक्रुः प्रशंसन्त्य ऊषुस्तत्र च काश्चन । नन्दः सचैलः स्नातश्च धृत्वा धौते च वाससी ॥६३॥
पारंपर्यविधिं तत्र चकार हृष्टमानसः । ब्राह्मणान्भोजयामास कारयामास मङ्गलम् ॥६४॥
वाद्यानि वादयामास बन्दिभ्यश्च ददौ धनम् । ततो नन्दश्च सानन्दं ब्राह्मणेभ्यो ददौ धनम् ॥६५॥
सद्रत्नानि प्रवालानि हीरकाणि च सादरम् । तिलानां पर्वतान्सप्त सुवर्णशतकं मुने ॥६६॥
रौप्यं धान्याचलं वस्त्रं गोसहस्रं मनोहरम् । दधि दुग्धं शर्करां च नवनीतं घृतं मधु ॥६७॥
मिष्टान्नं सल्लड्डुकौघं स्वादूनि मोदकानि च । भूमिं च सर्वसस्याढ्यां वायुवेगांस्तुरङ्गमान् ॥६८॥
तांबूलानि च तैलानि दत्त्वा हृष्टो बभूव ह । रक्षितुं सूतिकागारं योजयामास ब्राह्मणान् ॥६९॥
तत्र मंत्रज्ञमनुजान्स्थविरान्गोपिकागणान् । वेदांश्च पाठयामास हरेर्नामैकमङ्गलम् ॥७०॥
भक्त्या च ब्राह्मणद्वारा पूजयामास देवताः । गोपालिकाश्च वृद्धाश्च रत्नालङ्कारभूषिताः ॥७१॥
सस्मिता शीघ्रगामिन्य आजग्मुर्नन्दमन्दिरम् । नानाविधाश्च गणका ज्योतिःशास्त्रविशारदाः ॥७२॥
वाक्सिद्धाः पुस्तककरा आजग्मुर्नन्दमन्दिरम् । सस्मिता विप्रपत्न्यश्च वयस्याः स्थविरा वराः ॥७३॥
बालिका बालकयुता आजग्मुर्नन्दमन्दिरम् । तेभ्योऽपि प्रददौ रत्नं धनानि विविधानि च ॥७४॥
वरवस्त्राणि रौप्याणि गोसहस्राणि सादरम् । नन्दस्तेभ्यो नमस्कृत्य चकार विनयं मुदा ॥७५॥
आशिषं युयुजुः सर्वे ददृशुर्बालकं परम् । एवं संभृतसंभारो बभूव व्रजपुङ्गवः ॥७६॥
गणकैः कारयामास यद्भविष्यं शुभाशुभम् । एवं ववर्ध बालश्च शुक्लपक्षे यथा शशी ॥७७॥
नन्दालये हली चैव भुक्त मातुः पयोधरम् । तदा च रोहिणी हृष्टा तत्र पुत्रोत्सवे मुदा ॥७८॥
तैलसिन्दूरताम्बूलं धनं ताभ्यो ददौ मुने । दत्त्वाशिषश्च शिरसि ताश्च ते स्वालयं ययुः ॥७९॥
यशोदारोहिणीनन्दास्तस्थुर्गेहे मुदान्विताः ॥८०॥

इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवादे नन्दपुत्रोत्सवो नाम नवमोऽध्यायः ॥९॥
आदितः श्लोकानां समष्ट्यङ्काः-१०,७८७+८०=१०,८६७



## ॥ अथ दशमोऽध्यायः ॥

श्रीनारायण उवाच ॥

अथ कंसः सभामध्ये स्वर्णसिंहासनस्थितः । शुश्राव वाचं गगने सूनृतामशरीरिणीम् ॥१॥
किं करोषि महामूढ चिन्तां स्वश्रेयसः कुरु । जातः कालो धरण्यां ते तिष्ठोपाये नराधिप ॥२॥
नन्दाय तनयं दत्त्वा वसुदेवस्तवान्तकम् । कन्यामादाय तुभ्यं च दत्त्वा संमायया स्थितः ॥३॥
मायांशा कन्यकेयं च वासुदेवः स्वयं हरिः । तव हन्ता गोकुले च वर्द्धते नन्दमन्दिरे ॥४॥
देवक्याः सप्तमो गर्भो वर्द्धते नन्दमन्दिरे । देवक्याः सप्तमो गर्भो न सुस्रावामृतं सुतम् ॥९॥
स्थापयामास मायो तं रोहिणीजठरे किल । तत्र जातश्च शेषांशो बलदेवो महाबलः ॥६॥
गोकुले तौ च वर्धेते कालौ ते नन्दमन्दिरे । श्रुत्वेति वचनं राजा बभूवानम्रकन्धरः ॥७॥
चिन्तामवाप सहसा तत्याजाहारमुन्मनाः । पूतनां च समानीय प्राणेभ्यः प्रेयसीं सतीम् ॥८॥
उवाच भगिनीं राजा सभामध्ये च नीतिवित् ।
कंस उवाच ॥
पूतने गोकुलं गच्छ कार्यार्थं नन्दमन्दिरम् ॥९॥
विषाक्तं च स्तनं कृत्वा शिशवे देहि सत्वरम् । त्वं मनोयायिनी वत्से मायाशास्त्रविशारदा ॥१०॥
मायामानुषरूपं च विधाय व्रज योगिनि। दुर्वाससो महामन्त्रं प्राप्य सर्वत्रगामिनी ॥११॥
सर्वरूपं विधातुं त्वं शक्तासि सुप्रतिष्ठिते । इत्युक्त्वा तां महाराजस्तस्थौ संसदि नारद ॥१२॥
जगाम पूतना कंसं प्रणम्य कामचारिणी । तप्तकाञ्चनवर्णाभा नानालङ्कारभूषिता ॥१३॥
बिभ्रती कबरीभारं मालतीमाल्यसंयुतम् । कस्तूरीबिन्दुना युक्तं सिन्दूरं दधती मुदा ॥१४॥
मञ्जीररशनाभ्यां च कलशब्दं प्रकुर्वती । संप्राप्य गोष्ठं दुर्दर्शं नन्दालयमनोहरम् ॥१५॥
परिखाभिर्गभीराभिर्दुलङ्घ्याभिश्च वेष्टितम् । रचितं प्रस्तरैर्दिव्यैर्निर्मितं विश्वकर्मणा ॥१६॥
इन्द्रनीलैर्मरकतैः पद्मरागैश्च भूषितम् । सुवर्णकलशैर्दिव्यैश्चित्रितैः शेखरोज्वलैः ॥१७॥
प्राकारैर्गगनस्पर्शैश्चतुर्द्वारसमन्वितैः । युक्तं लोहकपाटैश्च द्वारपालसमन्वितैः ॥१८॥
वेष्टितं सुन्दरं रम्यं सुन्दरीगणवेष्टितम् । मुक्तामाणिक्यपरशैः पूर्णरत्नादिभिर्धनैः ॥१९॥
स्वर्णपात्रवटाकीर्णं गवां कोटिभिरन्वितम् । भरणीयैः किङ्करैश्च गोपलक्षैः समन्वितम् ॥२०॥
दासीनां च सहस्रैश्च कर्मव्यग्रैः समन्वितम् । प्रविवेशाश्रमं साध्वी सस्मिता सुमनोहरा ॥२१॥
दृष्ट्वा तां प्रविशन्तीं च गोप्यो दृष्ट्वानुमेनिरे । किं वा पद्मालया दुर्गा कृष्णं द्रष्टुं समागता ॥२२॥
प्रणेमुर्गोपिका गोपाः पप्रच्छुः कुशलं च ताम् । ददौ सिंहासनं पाद्यं वासयामास तत्र वै ॥२३॥
पप्रच्छ कुशलं सा च गोपानां बालकस्य च । उवास सस्मिता साध्वी पाद्यं जग्राह सादरम् ॥२४॥
तामूचुर्गोपिकाः सर्वाः का त्वमीश्वरि सांप्रतम् । वासस्ते कुत्र किं नाम किं वात्र कर्म नो वद ॥२५॥
तासां च वचनं श्रुत्वा साप्युवाच मनोहरम् । मथुरावसिनी गोपी सांप्रतं विप्रकामिनी ॥२६॥
श्रुतं वाचिकवक्त्रेण तत्त्वं मङ्गलसूचकम् । बभूव स्थविरे काले नन्दपुत्रो महानिति ॥२७॥
श्रुत्वागताहं तं द्रष्टुमाशिषं कर्तुमीप्सिताम् । पुत्रमानय तं दृष्ट्वा यामि कृत्वा तमाशिषम् ॥२८॥
ब्राह्मणीवचनं श्रुत्वा यशोदा हृष्टमानसा । प्रणमय्य सुतं क्रोडे ददौ ब्राह्मणयोषितः ॥२९॥
कृत्वा क्रोडे तु तं साध्वी चुचुम्ब च पुनः पुनः । स्तनं ददौ सुखासीना हरिं पुण्यवती सती ॥३०॥
अहोद्भुतोऽयं बालस्त सुन्दरो गोपसुन्दरि । गुणैर्नारायणसमो बालोयमित्युवाच ह ॥३१॥
कृष्णो विषस्तनं पीत्वा जहास वक्षसि स्थितः । तस्याः प्राणैः सह पपौ विषक्षीरं सुधामिव ॥३२॥
तत्याज बालकं साध्वी प्राणांस्त्यक्त्वा पपात ह । विकृताकारवदना चोत्तानवदना मुने ॥३३॥
स्थूलदेहं परित्यज्य सूक्ष्मदेहं विवेश सा । आरुरोह रथं शीघ्रं रत्नसारविनिर्मितम् ॥३४॥
पार्षदप्रवरैर्दिव्यैर्वेष्टितं सुमनोहरैः । श्वेतचामरलक्षेण शोभितं लक्षदर्पणैः ॥३५॥
वह्निशौचेन वस्त्रेण सूक्ष्मेण भूषितं वरम् । नानाचित्रविचित्रैश्च सद्रत्नकलशैर्युतम् ॥३६॥
सुन्दरं शतचक्रं च वलितं रत्नतेजसा । पार्षदास्तां रथे कृत्वा जग्मुर्गोलोकमुत्तमम् ॥३७॥
दृष्ट्वा तमद्भुतं लोका गोपिकाश्चातिविस्मिताः । कंसः श्रुत्वा च तत्सर्वं विस्मितश्च बभूव ह ॥३८॥
यशोदा बालकं नीत्वा क्रोडे कृत्वा स्तनं ददौ । मङ्गलं कारयामास विप्रद्वारा शिशोर्मुने ॥३९॥
ददाह देहं तस्याश्च नन्दः सानन्दपूर्वकम् । चन्दनागुरुकस्तूरीसमं संप्राप्य सौरभम् ॥४०॥

नारद उवाच ॥
सा वा का राक्षसीरूपा कथं पुण्यवती सती । केन पुण्येन तं दृष्ट्वा जगाम कृष्णमन्दिरम् ॥४१॥
श्रीनारायण उवाच ॥
बलियज्ञे वामनस्य दृष्ट्वा रूपं मनोहरम् । बलिकन्या रत्नमाला पुत्रस्नेहं चकार तम् ॥४२॥
मनसा मानसं चक्रे पुत्रस्य सदृशो मम । पिबेद्यदि स्तनं कृष्णः करोमि तं च वक्षसि ॥४३॥
हरिस्तन्मानसं ज्ञात्वा पपौ जन्मान्तरे स्तनम् । ददौ मातृगतिं तस्यै कामपूरः कृपानिधिः ॥४४॥
दत्त्वा विषस्तनं कृष्णं पूतना राक्षसी मुने । भक्त्या मातृगतिं प्राप कं भजाम विना हरिम् ॥४५॥
इत्येवं कथितं विप्र श्रीकृष्ण गुणकीर्तनम् । पदेपदे सुमधुरं प्रवरं कथयामि ते ॥४६॥
इति श्रीब्रह्मवैवर्त महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवादे पूतनामोक्षो नाम दशमोऽध्यायः ॥१०॥
आदितः श्लोकानां समष्ट्यङ्काः-१०,८६७+४६=१०,९१३



## ॥ अथैकादशोऽध्यायः ॥

श्रीनारायण उवाच ॥
एकदा गोकुले साध्वी यशोदा नन्दगेहिनी । गृहकर्मणि संसक्ता कृत्वा बालं स्ववक्षसि ॥१॥
वात्यारूपं तृणावर्तमागच्छन्तं च गोकुलम् । श्रीहरिर्मनसा ज्ञात्वा भारयुक्तो बभूव ह ॥२॥
भाराक्रान्ता यशोदा च तत्याज बालकं तदा । शयनं कारयित्वा च जगाम यमुनां मुने ॥३॥
एतस्मिन्नन्तरे तत्र वात्यारूपधरोऽसुरः । आदाय तं भ्रामयित्वा गत्वा च शतयोजनम् ॥४॥
बभंज वृक्षशाखाश्च ह्यन्धीभूतं च गोकुलम् । चकार सद्यो मायावी पुनस्तत्र पपात ह ॥६३॥
असुरोऽपि हरिस्पर्शाज्जगाम हरिमन्दिरम् । सुन्दरं रथमारुह्य कृत्वा कर्मक्षयं स्वकम् ॥६॥
पाण्डयदेशोद्भवो राजा शापादुर्वाससोऽसुरः । श्रीकृष्णचरणस्पर्शाद्गोलोकं स जगाम ह ॥६३॥
वात्यारूपे गते गोपा गोप्यश्च भयविह्वलाः । न दृष्ट्वा बालकं तत्र शयानं शयने मुने ॥८॥
सर्वे निजघ्नुः स्वं वक्षस्थलं शोकाकुला भयात् । केचिन्मूर्छामवापुश्च रुरुदुश्चापि केचन ॥९॥
अन्वेषणं प्रकुर्वन्तो ददृशुर्बालकं व्रजे । धूलिधूसरसर्वाङ्गं पुष्पोद्यानान्तरस्थितम् ॥१०॥
बाह्यैकदेशे सरसस्तीरे नीरसमन्विते । पश्यन्तं गगनं शश्वद्वदन्तं भयकातरम् ॥११॥
गृहीत्वा बालकं नन्दः कृत्वा वक्षसि सत्वरम् । दर्शं दर्शं मुखं तस्य रुरोद च शुचाऽन्वितः ॥१२॥
यशोदा रोहिणी शीघ्रं दृष्ट्वा बालं रुरोद च । कृत्वा वक्षसि तद्वक्त्रं चुचुम्ब च मुहुर्मुहुः ॥१३॥
मङ्गलं कारयामास स्नापयामास बालकम् । स्तनं ददौ यशोदा च प्रसन्नवदनेक्षणा ॥१४॥
नारद उवाच ॥
कथं शशाप दुर्वासाः पाण्डयदेशोद्भवं नृपम् । सुविचार्य वद ब्रह्मन्नितिहासं पुरातनम् ॥१५॥
श्रीनारायण उवाच ॥
पाण्डयदेशाधिपो राजा सहस्राक्षः प्रतापवान् । स्त्रीसहस्रं समादाय कामबाणप्रपीडितः ॥१६॥
मनोहरे निर्जने च पर्वते गन्धमादने । विजहार नदीतीरे पुष्पोद्याने मनोरमे ॥१७॥
नानाप्रकारशृङ्गारं विपरीतादिकं नृपः । नखदन्तक्षताङ्गं च कामिनीनां चकार सः ॥१८॥
कृत्वा मूर्तिसहस्रं च योगीन्द्रो नृपतीश्वरः । कृत्वा स्थलविहारं च जलक्रीडां चकार ह ॥१९॥
नार्यो विवसनाः सर्वा नग्नाश्च नृपयोषितः । विजहुश्च पुष्पभद्रानदीतीरे मनोहरे ॥२०॥
एतस्मिन्नन्तरे तत्र समायातो महामुनिः । शिष्यलक्षैः परिवृतो गच्छन्वै शङ्करं प्रति ॥२१॥
दृष्ट्वा मुनिं महामत्तो नोत्तस्थौ न ननाम ह । वाचा हस्तेन राजा च संभाषां न चकार ह ॥२२॥
दृष्ट्वा चुकोप नृपतिं शशाप स्फुरिताधरः । असुरो भव पापिष्ठ योगाद्भ्रष्टो भुवं व्रज ॥२३॥
भारते लक्षवर्षं च स्थातव्यं ते नराधम । ततो हरिपदस्पर्शाद्गोलोकं यास्यसि ध्रुवम् ॥२४॥
स्थानेस्थाने हे महिष्यो जनिं लभत भारते । राजेन्द्रगेहे राजेन्द्राद्भविष्यथ मनोहराः ॥२५॥
इत्युक्त्वा तु मुनीन्द्रस्तु जगाम शङ्करालयम् । हा हा शब्दं विचक्रुश्च शिष्यसङ्घाः कृपालवः ॥२६॥
गते मुनीन्द्रे राजेन्द्रो रुरोद च सरित्तटे । रुरुदू रमणीयाश्च रमण्यो विरहातुराः ॥२७॥
हे नाथ रमणश्रेष्ठेत्युच्चार्य च पुनः पुनः । त्वां विना वा क्व यास्यामो वयं त्वं वा क्व यास्यसि ॥२८॥
वयं नो विहरिष्यामस्त्वया सार्द्धं सुनिर्जने । न करिष्यसि राज्यं त्वं न यास्यामो गृहं वयम् ॥२९॥
शरच्चन्द्रप्रभामुष्टं न द्रक्ष्यामो मुखं तव । प्रसारिताभ्यां बाहुभ्यां नानयिष्याम इत्यतः ॥३०॥
इत्युक्त्वा रुरुदुः सर्वाः पुरस्कृत्य नराधिपम् । मूर्छामवापुश्चरणं धृत्वा राज्ञः सरित्तटे ॥३१॥
राजाऽग्निकुण्डमाधाय नारीभिः सह नारद । स्मृत्वा हरिपदाम्भोजं ज्वलदग्निं विवेश ह ॥३२॥

हाहाकारं सुराः सर्वे विचक्रुर्गगने स्थिताः । इत्यूचुर्मुनयश्चैव दैवं च बलवत्तरम् ॥३३॥
स च राजा तृणावर्तो जगाम हरिमन्दिरम् । महिष्यो भारते वर्षे लेभिरे जन्म वाञ्छितम् ॥३४॥
इत्येवं कथितं सर्वं हरेर्माहात्म्य मुत्तमम् । मोक्षणं नृपतेश्चैव मुनीन्द्रशापहेतुकम् ॥३५॥
इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवादे तृणावर्तवधो नामैकादशोऽध्यायः ॥११॥
आदितः श्लोकानां समष्टयङ्काः-१०,९१३+३५=१०,९४८



## ॥ अथ द्वादशोऽध्यायः ॥

श्रीनारायण उवाच ॥
एकदा मन्दिरे नन्दपत्नी सानन्दपूर्वकम् । कृत्वा वक्षसि गोविन्दं क्षुधितं च स्तनं ददौ ॥१॥
एतस्मिन्नन्तरे गोप्य आजग्मुनन्दमन्दिरम् । स्थविराश्च वयस्याश्च बालिका बालकान्विताः ॥२॥
अतृप्तं बालकं शीघ्रं संन्यस्य शयने सती । प्रणनाम समुत्थाय कर्मण्यौत्थानिके मुदा ॥३॥
तैलसिन्दूरताम्बूलं ददौ ताभ्यो मुदाऽन्विता । मिष्टवस्तूनि वस्त्राणि भूषणानि च गोपिका ॥४॥
एतस्मिन्नन्तरे कृष्णो रुरोद क्षुधितस्तदा । प्रेरयित्वा स चरणं मायेशो मायया विभुः ॥५॥
पपात चरणं तस्य प्रवीणे शकटे मुने । विश्वम्भरपदाघातात्तच्च चूर्णं बभूव ह ॥६॥
बभञ्ज शकटं पेतुर्भग्नकाष्ठानि तत्र वै । पपात दधि दुग्धं च नवनीतं घृतं मधु ॥६३॥
दृष्ट्वाऽऽश्चर्यं गोपिकाश्च दुद्रुवुर्बालकं भयात् । ददृशुर्भग्नशकटमिन्धनाभ्यन्तरे शिशुम् ॥८॥
भग्नभाण्डसमूहं च पतितं बहुगोरसम् । प्रेरयित्वा तु काष्ठानि जग्राह बालकं भिया ॥९॥
मायारक्षितसर्वाङ्गं रुदितं क्षुधितं क्षुधा । स्तनं ददौ यशोदा तं रुरोद च भृशं शुचा ॥१०॥
पप्रच्छुर्बालकान्गोपा बभञ्ज शकटं कथम् । किञ्चिद्धेतुं न पश्यामः सहसेति किमद्भुतम् ॥११॥
इत्यूचुर्बालकाः सर्वे गोपाः शृणुत मद्वचः । श्रीकृष्णस्य पदाघाताद् बभञ्ज शकटं ध्रुवम् ॥१२॥
श्रुत्वा तद्वचनं गोपा गोप्यश्च जहसुर्मुदा । न हि जग्मुः प्रतीतिं च मिथ्येत्यूचुर्व्रजे प्रजाः ॥१३॥
शिशोः स्वस्त्ययनं कार्यं चक्रुर्ब्राह्मणपुङ्गवाः । हस्तं दत्त्वा शिशोर्गात्रे पपाठ कवचं द्विजः ॥१४॥
वदामि तत्ते विप्रेन्द्र कवचं सर्वरक्षणम् । यद्दत्तं मायया पूर्वं ब्रह्मणे नाभिपङ्कजे ॥१५॥
निद्रिते जगतीनाथे जले च जलशायिनि । भीताय स्तुतिकर्त्रे च मधुकैटभयोर्भयात् ॥१६॥
योगनिद्रोवाच ॥
दूरीभूतं कुरु भयं भयं किं ते हरौ स्थिते । स्थितायां मयि च ब्रह्मन्सुखी तिष्ठ जगत्पते ॥१७॥
श्रीहरिः पातु ते वक्त्रं मस्तकं मधुसूदनः । श्रीकृष्णश्चक्षुषी पातु नासिकां राधिकापतिः ॥१८॥
कर्णयुग्मं च कण्ठं च कपालं पातु माधवः । कपोलं पातु गोविन्दः केशांश्च केशवः स्वयम् ॥१९॥
अधरोष्ठं हृषीकेशो दन्तपङ्क्तिं गदाग्रजः । रासेश्वरश्च रसनां तालुकं वामनो विभुः ॥२०॥
वक्षः पातु मुकुन्दश्च जठरं पातु दैत्यहा । जनार्दनः पातु नाभिं पातु विष्णुश्च मेहनम् ॥२१॥
नितम्बयुग्मं गुह्यं च पातु ते पुरुषोत्तमः । जानुयुग्मे जानकीशः पातु ते सर्वदा विभुः ॥२२॥
हस्तयुग्मं नृसिंहश्च पातु सर्वत्र सङ्कटे । पादयुग्मं वराहश्च पातु ते कमलोद्भवः ॥२३॥
ऊर्ध्वं नारायणः पातु ह्यधस्तात्कमलापतिः । पूर्वस्यां पातु गोपालः पातु वह्नौ दशास्यहा ॥२४॥
वनमाली पातु याम्यां वैकुण्ठः पातु नैर्ऋतौ । वारुण्यां वासुदेवश्च सतो रक्षाकरः स्वयम् ॥२५॥
पातु ते संततमजो वायव्यां विष्टरश्रवाः । उत्तरे च सदा पातु तेजसा जलजासनः ॥२६॥
ऐशान्यामीश्वरः पातु पातु सर्वत्र शत्रुजित् । जले स्थले चान्तरिक्षे निद्रायां पातु राघवः ॥२७॥
इत्येवं कथितं ब्रह्मन्कवचं परमाद्भुतम् । कृष्णेन कृपया दत्तं स्मृतेनैव पुरा मया ॥२८॥
शुंभेन सह संग्रामे निर्लक्ष्ये घोरदारुणे । गगने स्थितया सद्यः प्राप्तिमात्रेण सो जितः ॥२९॥
कवचस्य प्रभावेण धरण्यां पतितो मृतः । पूर्वं वर्षशतं खे च कृत्वा युद्धं भयावहम् ॥३०॥
मृते शुंभे च गोविन्दः कृपालुर्गगनस्थितः । मालां च कवचं दत्त्वा गोलोकं स जगाम ह ॥३१॥
कल्पान्तरस्य वृत्तान्तं कृपया कथितं मुने । अभ्यन्तरभयं नास्ति कवचस्य प्रभावतः ॥३२॥
कोटिशः कोटिशो नष्टा मया दृष्टाश्च वेधसः । अहं च हरिणा सार्द्धं कल्पेकल्पे स्थिरा सदा ॥३३॥
इत्युक्त्वा कवचं दत्त्वा साऽन्तर्धानं चकार ह । निःशङ्को नाभिकमले तस्थौ स कमलोद्भवः ॥३४॥
सुवर्णगुटिकायां च कृत्वेदं कवचं परम् । कण्ठे वा दक्षिणे बाहौ बध्नीयाद्यः सुधीः सदा ॥३५॥
विषाग्निजलशत्रुभ्यो भयं तस्य न जायते । जले स्थले चान्तरिक्षे निद्रायां रक्षतीश्वरः ॥३६॥
संग्रामे वज्रपाते च विपत्तौ प्राणसङ्कटे । कवचस्मरणादेव सद्यो निःशङ्कतां व्रजेत् ॥३७॥
बद्ध्वेदं कवचं कण्ठे शङ्करस्त्रिपुरं पुरा । जघान लीलामात्रेण दुरन्तमसुरेश्वरम् ॥३८॥

बद्ध्वेदं कवचं काली रक्तबीजं चखाद सा । सहस्रशीर्षा धृत्वेदं विश्वं धत्ते तिलं यथा ॥३९॥
आवां सनत्कुमारश्च धर्मसाक्षी च कर्मणाम् । कवचस्य प्रभावेण सर्वत्र जयिनो वयम् ॥४०॥
तस्य नन्दशिशोः कण्ठे चकार कवचं द्विजः । आत्मनः कवचं कण्ठे दधार च स्वयं हरिः ॥४१॥
प्रभावः कथितः सर्वः कवचस्य हरेस्तथा । अनन्तस्याच्युतस्यैव प्रभावमतुलं मुने ॥४२॥
इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवादे
शकटभञ्जनयोगनिद्रोक्तकवचन्यासो नाम द्वादशोऽध्यायः ॥१२॥
आदितः श्लोकानां समष्ट्यङ्काः-१०,९४८+४२=१०,९९०



## ॥ अथ त्रयोदशोऽध्यायः ॥

श्रीनारायण उवाच ॥
अपरं कृष्णमाहात्म्यं शृणु किञ्चिन्महामुने । विघ्ननिघ्नं पापहरं महापुण्यकरं परम् ॥१॥
एकदा नन्दपत्नी च कृत्वा कृष्णं स्ववक्षसि । स्वर्णसिंहासनस्था च क्षुधितं तं स्तनं ददौ ॥२॥
एतस्मिन्नन्तरे तत्र विप्रेन्द्रैकः समागतः । वृतः शिष्यसमूहैश्च प्रज्वलन्ब्रह्मतेजसा ॥३॥
प्रजपन्परमं ब्रह्म शुद्धस्फटिकमालया । दण्डी छत्री शुक्लवासा दन्तपङ्क्तिविराजितः ॥४॥
ज्योतिर्ग्रन्थो मूर्तिमांश्च वेदवेदाङ्गपारगः । परिबिभ्रज्जटाजालं तप्तकाञ्चनसन्निभम् ॥५॥
शरत्पार्वणचन्द्रास्यो गौराङ्गः पद्मलोचनः । योगीन्द्रो धूर्जटेः शिष्यः शुद्धभक्तो गदाभृतः ॥६॥
व्याख्यामुद्राकरः श्रीमाञ्छिष्यानध्यापयन्मुदा । वेदव्याख्यां कतिविधां प्रकुर्वन्निव लीलया ॥७॥
एकीभूय चतुर्वेदास्तेजसा मूर्तिमानिव । साक्षात्सरस्वतीकण्ठः सिद्धान्तैकविशारदः ॥८॥
ध्यानैकनिष्ठः श्रीकृष्णपादाम्भोजे दिवानिशम् । जीवन्मुक्तो हि सिद्धेशः सर्वज्ञः सर्वदर्शनः ॥९॥
तं दृष्ट्वा सा समुत्तस्थौ यशोदा प्रणनाम च । पाद्यं गां मधुपर्कं च स्वर्णसिंहासनं ददौ ॥१०॥
बालकं वन्दयामास मुनीन्द्रं सस्मितं मुदा । मुनिश्च मनसा चक्रे प्रणामशतकं हरिम् ॥११॥
आशिषं प्रददौ प्रीत्या वेदमन्त्रोपयोगिकम् । प्रणनाम च शिष्यांश्च ते तां युयुजुराशिषम् ॥१२॥
शिष्यान्पाद्यादिकं भक्त्या प्रददौ च पृथक्पृथक् । साशिष्याङ्घ्री च प्रक्षाल्य समुवास सुखासने ॥१३॥
समुद्यता सा प्रष्टुं च पुटाञ्जलियुता सती । स्वक्रोडे बालकं कृत्वा भक्तिनम्रात्मकन्धरा ॥१४॥
स्वात्मारामं मङ्गलं च प्रष्टुं यद्यपि न क्षमा । तथाऽपि भवतो नाम शिवं पृच्छामि सांप्रतम् ॥१५॥
अबला बुद्धिहीनाया दोषं क्षन्तुं सदाऽर्हसि । मूढस्य सततं दोषं क्षमां कुर्वन्ति साधवः ॥१६॥
अङ्गिरा वाऽथ वाऽत्रिर्वा मरीचिर्गौतमोऽथ वा । ऋतुः किं वा प्रचेता वा पुलस्त्यः पुलहोऽथवा ॥१७॥
दुर्वासाः कर्दमस्त्वं वा वशिष्ठो गर्ग एव वा । जैगीषव्यो देवलो वा कपिलो वा स्वयं विभुः ॥१८॥
सनत्कुमारः सनकः सनन्दो वा सनातनः । वोढुः पञ्चशिखो वा त्वमासुरिः सौभरिः किमु ॥१९॥
विश्वामित्रोऽथ वाल्मीको वामदेवोऽथ कश्यपः । संवर्तः किमुतथ्यो वा किं कचो वा बृहस्पतिः ॥२०॥
भृगुः शुक्रश्च च्यवनो नरनारायणोऽथवा । सक्थिनः पराशरो व्यासः शुकदेवोऽथ जैमिनिः ॥२१॥
मार्कण्डेयो लोमशश्च कण्वः कात्यायनस्तथा । आस्तीको वा जरत्कारुर्ऋष्यशृङ्गो विभाण्डकः ॥२२॥
पौलस्त्यस्त्वमगस्त्यो वा शरद्वान्गिरिरेव च । शमीकोऽरिष्टनेमिश्च माण्डव्यः पैल एव च ॥२३॥
पाणिनिर्वा कणादो वा शाकल्यः शाकटायनः । अष्टावक्रो भागुरिर्वा सुमन्तुर्वत्स एव वा ॥२४॥
जाबालो याज्ञवल्क्यश्च वैशंपायन एव च । यतिर्हंसी पिप्पलादो मैत्रेयः करुषस्तथा ॥२५॥
उपमन्युर्गौरमुखोऽरुणिरौर्वोऽथ कक्षिवान् । भरद्वाजो वेदशिरा शङ्ककर्णोऽथ शौनकः ॥२६॥
एतेषां पुण्यश्लोकानां को भवान्वद मे प्रभो । प्रत्युत्तरार्हा नाहं चेत्तथाऽपि वक्तुमर्हसि ॥२७॥
किङ्करः किङ्करी वाऽपि समर्था प्रभुमीश्वरम् । यो यस्य सेवानियतः स कं पृच्छति तं विना ॥२८॥
धन्याऽहं कृतकृत्याहं सफलं जीवितं मम । त्वत्पादाब्जरजःस्पर्शाज्जन्मकोट्यंहसा क्षयः ॥२९॥
त्वत्पादोदकसंस्पर्शात्सद्यः पूता वसुंधरा । तवागमनमात्रेण तीर्थीभूतो ममाश्रमः ॥३०॥
येये श्रुताः श्रुतौ ब्रह्मञ्च्छ्रुतिसारा महाजनाः । तेषामेको मया दृष्टः पूर्वपुण्यफलोदयात् ॥३१॥
शिष्या वेदा मूर्तिमन्तो ग्रीष्म मध्याह्नभास्कराः । गोकुलं मत्कुलं सद्यः पुनन्ति पादरेणुना ॥३२॥
आशिषं कर्तुमर्हन्ति प्रसन्नमनसा शिशुम् । पूर्णस्वस्त्ययनं सद्यो विप्राशीर्वचनं ध्रुवम् ॥३३॥
इत्येवमुक्त्वा नन्दस्त्री भक्त्या तस्थौ मुनेः पुरः । नरं प्रस्थापयामास नन्दमानयितुं सती ॥३४॥
यशोदावचनं श्रुत्वा जहास मुनिपुङ्गवः । जहसुः शिष्यसङ्घाश्च भासयन्तो दिशो दश ॥३५॥
हितं तथ्यं नीतियुक्तं महत्पुण्यकरं परम् । तामुवाच मुदा युक्तः शुद्धबुद्धिर्महामुनिः ॥३६॥
श्रीगर्ग उवाच ॥

सुधामयं ते वचनं लौकिकं च कुलोचितम् । यस्य यत्र कुले जन्म स एव तादृशो भवेत् ॥३७॥
सर्वेषां गोपपद्मानां गिरिभानुश्च भास्करः । पत्नी पद्मासमा तस्य नाम्ना पद्मावती सती ॥३८॥
तस्याः कन्या यशोदा त्वं यशोवर्द्धनकारिणी । बल्लवानां च प्रवरो लब्धो नन्दश्च वल्लभः ॥३९॥
नन्दो यस्त्वं च या भद्रे बालो यो येन वा गतः । जानामि निर्जने सर्वं वक्ष्यामि नन्दसन्निधिम् ॥४०॥
गर्गोऽहं यदुवंशानां चिरकालं पुरोहितः । प्रस्थापितोऽहं वसुना नान्यसाध्ये च कर्मणि ॥४१॥
एतस्मिन्नन्तरे नन्दः श्रुतमात्रं जगाम ह । ननाम दण्डवद्भूमौ मूर्ध्ना तं मुनिपुङ्गवम् ॥४२॥
शिष्यान्ननाम मूर्ध्ना च ते तं युयुजुराशिषम् । समुत्थायासनात्तूर्णं यशोदानन्द एव च ॥४३॥
गृहीत्वाऽभ्यन्तरं रम्यं जगाम विदुषां वरः । गर्गो नन्दो यशोदा च सपुत्रा सा मुदाऽन्विता ॥
वाक्यं गर्गस्तदोवाच निगूढं निर्जने मुने ॥४४॥
श्रीगर्ग उवाच ॥
अयि नन्द प्रवक्ष्यामि वचनं ते सुखावहम् । प्रस्थापितोऽहं वसुना येन तच्छ्रूयतामिति ॥४५॥
वसुना सूतिकागारे शिशुः प्रत्यर्पणं कृतः । पुत्रोऽयं वसुदेवस्य ज्येष्ठश्च तस्य च ध्रुवम् ॥४६॥
कन्या ते तेन या नीता मथुरां कंसभीरुणा । अस्यान्नप्राशनायाहं नामानुकरणाय च ॥
गूढेन प्रेषितस्तेन तस्योद्योगं कुरु द्विज ॥४७॥
पूर्णब्रह्मस्वरूपोऽयं शिशुस्ते मायया महीम् । आगत्य भारहरणं कर्ता धात्रा च सेवितः ॥
गोलोकनाथो भगवाञ्छ्रीकृष्णो राधिकापतिः ॥४८॥
नारायणो यो वैकुण्ठे कमलाकान्त एव च । श्वेतद्वीपनिवासी यः पिता विष्णुश्च सोऽप्यजः ॥४९॥
कपिलोऽन्ये तदंशाश्च नरनारायणावृषी । सर्वेषां तेजसां राशिर्मूर्तिमानागतः किमु ॥५०॥
तं वसुं दर्शयित्वा च शिशुरूपो बभूव ह । सांप्रतं सूतिकागारादाजगाम तवालयम् ॥५१॥
अयोनिसंभवश्चायमाविर्भूतो महीतले । वायुपूर्णं मातृगर्भं कृत्वा च मायया हरिः ॥५२॥
आविर्भूय वसुं मूर्तिं दर्शयित्वा जगामह । युगेयुगे वर्णभेदो नामभेदोऽस्य बल्लव ॥५३॥
शुक्लः पीतस्तथा रक्त इदानीं कृष्णतां गतः । शुक्लवर्णः सत्ययुगे सुतीव्रतेजसावृतः ॥५४॥
त्रेतायां रक्तवर्णोऽयं पीतोऽयं द्वापरे विभुः । कृष्णवर्णः कलौ श्रीमांस्तेजसां राशिरेव च ॥५५॥
परिपूर्णतमं ब्रह्म तेन कृष्ण इति स्मृतः । ब्रह्मणो वाचकः कोऽयमृकारोऽनन्तवाचकः ॥५६॥
शिवस्य वाचकः षश्च नकारो धर्मवाचकः । अकारो विष्णुवचनः श्वेतद्वीपनिवासिनः ॥५७॥
नरनारायणार्थस्य विसर्गो वाचकः स्मृतः । सर्वेषां तेजसां राशिः सर्वमूर्तिस्वरूपकः ॥५८॥
सर्वाधारः सर्वबीजस्तेन कृष्ण इति स्मृतः । कर्मनिर्मूलवचनः कृषिर्नो दास्यवाचकः ॥५९॥
अकारो दातृवचनस्तेन कृष्ण इति स्मृतः । कृषिर्निःश्रेष्ठवचनो नकारो भक्तिवाचकः ॥६०॥
अकारः प्राप्तिवचनस्तेन कृष्ण इति स्मृतः । कृषिर्निर्वाणवचनो नकारो मोक्षवाचकः ॥६१॥
अकारो दातृवचनस्तेन कृष्ण इति स्मृतः । नाम्नां भगवतो नन्द कोटीनां स्मरणेन यत् ॥६२॥
तत्फलं लभते नूनं कृष्णेति स्मरणे नरः । यद्विधं स्मरणात्पुण्यं वचनाच्छ्रवणात्तथा ॥६३॥
कोटिजन्मांहसो नाशो भवेद्यत्स्मरणादिकात् । विष्णोर्नाम्नां च सर्वेषां सारात्सारं परात्परम् ॥६४॥
कृष्णेति सुन्दरं नाम मङ्गलं भक्तिदायकम् । ककारोच्चारणाद्भक्तः कैवल्यं मृत्युजन्महम् ॥६५॥
ऋकाराद्दास्यमतुलं षकाराद्भक्तिमीप्सिताम् । नकारात्सहवासं च तत्समं कालमेव च ॥६६॥
तत्सारूप्यं विसर्गाच्च लभते नात्र संशयः । ककारोच्चारणादेव वेपन्ते यमकिङ्कराः ॥६७॥
ऋकारोक्तेर्न तिष्ठन्ति षकारात्पातकानि च । नकारोच्चारणाद्रोगा अकारान्मृत्युरेव च ॥६८॥
ध्रुवं सर्वे पलायन्ते नामोच्चारणभीरवः । स्मृत्युक्तिश्रवणोद्योगात्कृष्णनाम्नो व्रजेश्वर ॥६९॥
रथं गृहीत्वा धावन्ति गोलोकात्कृष्णकिङ्कराः । पृथिव्या रजसः संख्यां कर्तुं शक्ता विपश्चितः ॥७०॥
नाम्नः प्रभावसंख्यानं सन्तो वक्तुं न च क्षमाः । पुरा शङ्करवक्त्रेण नाम्नोऽस्य महिमा श्रुतः ॥७१॥
गुणान्नामप्रभावं च किञ्चिज्जानाति मद्गुरुः । ब्रह्माऽनन्तश्च धर्मश्च सुरर्षिमनुमानवाः ॥७२॥
वेदाः सन्तो न जानन्ति महिम्नः षोडशीं कलाम् । इत्येवं कथितो नन्द महिमा च सुतस्य च ॥७३॥
यथामति यथाज्ञानं गुरुवक्त्राद्यथा श्रुतम् । कृष्णः पीताम्बरः कंसध्वंसी च विष्टरश्रवाः ॥७४॥
देवकीनन्दनः श्रीशो यशोदानन्दनो हरिः । सनातनोऽच्युतोऽनन्तः सर्वेशः सर्वरूपधृक् ॥७५॥
सर्वाधारः सर्वगतिः सर्वकारणकारणम् । राधाबन्धू राधिकात्मा राधिकाजीवनस्वयम् ॥७६॥
राधाप्राणो राधिकेशो राधिकारमणः स्वयम् । राधिकासहचारी च राधामानसपूरणः ॥७७॥
राधाधनो राधिकाङ्गो राधिकासक्तमानसः । राधिकाचित्तचोरश्च राधाप्राणाधिकः प्रभुः ॥७८॥
परिपूर्णतमं ब्रह्म गोविन्दो गरुडध्वजः । नामान्येतानि कृष्णस्य श्रुतानि मन्मुखाद्धृदि ॥७९॥
जन्ममृत्युहराण्येव रक्ष नन्द शुभेक्षण । कृतं निरूपणं नाम्नां कनिष्ठस्य यथा श्रुतम् ॥८०॥

ज्येष्ठस्य हलिनो नाम्नः सङ्केतं शृणु मन्मुखात् । गर्भसङ्कर्षणादेव नाम्ना सङ्कर्षणः स्मृतः ॥८१॥
नास्त्यन्तोऽस्यैव वेदेषु तेनानन्त इति स्मृतः । बलदेवो बलोद्रेकाद्धली च हलधारणात् ॥८२॥
शितिवासा नीलवासान्मुसली मुसलायुधात् । रेवत्या सह सम्भोगाद्रेवतीरमणः स्वयम् ॥८३॥
रोहिणीगर्भवासात्तु रौहिणेयो महामतिः । इत्येवं ज्येष्ठपुत्रस्य श्रुतं नाम निवेदितम् ॥८४॥
यास्याम्यहं गृहं नन्द सुखं तिष्ठ स्वमन्दिरे । ब्राह्मणस्य वचः श्रुत्वा नन्दः स्तब्धो बभूव ह ॥८५॥
निश्चेष्टा नन्दपत्नी च जहास बालकः स्वयम् । प्रणम्योवाच नन्दस्तं वाक्यं विनयपूर्वकम् ॥८६॥
पुटाञ्जलियुतो भूत्वा भक्तिनम्रात्मकन्धरः ।
नन्द उवाच ॥
गतश्चेत्त्वं तदा कर्म करिष्यत्येव को महान् ॥८७॥
स्वयं शुभेक्षणं कृत्वा कुरु नाम्नाऽन्नप्राशनम् । यन्नामौघश्च कथितो राधाप्राणादिको दश ॥८८॥
तस्यापि का वा राधेति कन्यका कस्य च ध्रुवम् । नन्दस्य वचनं श्रुत्वा जहास मुनिपुङ्गवः ।
निगूढं परमं तत्त्वं रहस्यं कथयामि ते ॥८९॥
श्रीगर्ग उवाच ॥
शृणु नन्द प्रवक्ष्यामि इतिहासं पुरातनम् ॥९०॥
पुरा गोलोकवृत्तान्तं श्रुतं शङ्करवक्त्रतः । श्रीदाम्नो राधया सार्द्धं बभूव कलहो महान् ॥९१॥
श्रीदामशापाद्दैवेन गोपी राधा च गोकुले । वृषभानुसुता सा च माता तस्याः कलावती ॥९२॥
कृष्णस्यार्द्धाङ्गसंभूता नाथस्य सदृशी सती । गोलोकवासिनी सेयमत्र कृष्णाज्ञयाऽधुना ॥९३॥
अयोनिसंभवा देवी मूलप्रकृतिरीश्वरी । मातुर्गर्भं वायुपूर्णं कृत्वा च मायया सती ॥५४॥
वायुनिःसरणे काले धृत्वा च शिशुविग्रहम् । आविर्बभूव मायेयं पृथ्व्यां कृष्णोपदेशतः ॥९५॥
वर्धते सा व्रजे राधा शुक्ले चन्द्रकला यथा । श्रीकृष्णतेजसोऽर्द्धेन सा च मूर्तिमती सती ॥९६॥
एका मूर्तिर्द्विधाभूता भेदो वेदे निरूपितः । इयं स्त्री सा पुमान् किंवा सा वा कान्ता पुमानयम् ॥९७॥
द्वे रूपे तेजसा तुल्ये रूपेण च गुणेन च । पराक्रमेण बुद्ध्या वा ज्ञानेन संपदाऽपि च ॥९८॥
पुरतो गमनेनैव किंतु सावयसाधिका । ध्यायते तामयं शश्वदिमं सा स्मरति प्रियम् ॥९९॥
रचिता साऽस्य प्राणैश्च तत्प्राणैर्मूर्तिमानयम् । अस्य राधानुसारेण गोकुलागमनं परम् ॥१००॥
स्वीकारं सार्थकं कर्तुं गोकुले यत्कृतं पुरा । कंसभीतिच्छलेनैव गोकुलागमनं हरेः ॥१०१॥
प्रतिज्ञापालनार्थाय भयेशस्य भयं कुतः । राधाशब्दस्य व्युत्पत्तिः सामवेदे निरूपिता ॥१०२॥
नारायणस्तामुवाच ब्रह्माणं नाभिपङ्कजे । ब्रह्मा तां कथयामास ब्रह्मलोके च शङ्करम् ॥१०३॥
पुरा कैलासशिखरे मामुवाच महेश्वरः । देवानां दुर्लभां नन्द निशामय वदामि ते ॥१०४॥
सुरासुरमुनीन्द्राणां वाञ्छितां मुक्तिदां पराम् । रेफो हि कोटिजन्माघं कर्मभोगं शुभाशुभम् ॥१०५॥
आकारो गर्भवासं च मृत्युं च रोगमुत्सृजेत् । धकार आयुषो हानिमाकारो भवबन्धनम् ॥१०६॥
श्रवणस्मरणोक्तिभ्यः प्रणश्यति न संशयः । रेफो हि निश्चलां भक्तिं दास्यं कृष्णपदांबुजे ॥१०७॥
सर्वेप्सितं सदानन्दं सर्वसिद्धौघमीश्वरम् । धकारः सहवासं च तत्तुल्यकालमेव च ॥१०८॥
ददाति सार्ष्टिसारूप्यं तत्त्वज्ञानं हरेः समम् । आकारस्तेजसां राशिं दानशक्तिं हरौ यथा ॥१०९॥
योगशक्तिं योगमतिं सर्वकालं हरिस्मृतिम् । श्रुत्युक्तिस्मरणाद्योगान्मोहजालं च किल्बिषम् ॥११०॥
रोगशोकमृत्युयमा वेपन्ते नात्र संशयः । राधामाधवयोः किञ्चिद्व्याख्यानं च यतः श्रुतम् ॥१११॥
तदुक्तं च यथाज्ञानं साकल्यं वक्तुमक्षमः । आराद्वृन्दावने नन्द विवाहो भविताऽनयोः ॥११२॥
पुरोहितो जगद्धाता कृत्वाऽग्निं साक्षिणं मुदा । कुबेरपुत्रमोक्षं च गव्यस्याहृत्य भक्षणम् ॥११३॥
हिंसनं धेनुकस्यैव कानने तालभोजनम् । बककेशिप्रलम्बानां हिंसनं चाऽथ लीलया ॥११४॥
मोक्षणं द्विजपत्नीनां मिष्टान्नपानभोजनम् । भञ्जनं शक्रयागस्य शक्राद्गोकुलरक्षणम् ॥११५॥
गोपीनां वस्त्रहरणं व्रतसंपादनं तथा । ताभ्यः पुनर्वस्त्रदानं वरदानं यथेप्सितम् ॥११६॥
चेतसां हरणं तासामयं वश्याः करिष्यति । रासोत्सवं महारम्यं सर्वेषां हर्षवर्द्धनम् ॥११७॥
पूर्णचन्द्रोदये नक्तं वसन्ते रासमण्डले । गोपीनां नवसंभोगात्कृत्वा पूर्णं मनोरथम् ॥११८॥
ताभिः सह जलक्रीडां करिष्यति कुतूहलात् । विच्छेदोऽस्य वर्षशतं श्रीदामशापहेतुकम् ॥११९॥
गोपालैर्गोपिकाभिश्च भविता राधया सह । मथुरागमनं तत्र गोपीनां शोकवर्द्धनम् ॥१२०॥
पुनः प्रबोधनं तासां दानमाध्यात्मिकस्य च । स्यन्दनाक्रूरयो रक्षां सद्यस्ताभ्यां करिष्यति ॥१२१॥
रथमारोहणं कृत्वा मथुरागमनं पुनः । पितृभ्रातृव्रजैः सार्द्धं विलङ्घ्य यमुनां व्रजे ॥१२२॥
अक्रूराय ज्ञानदानं दर्शयित्वा स्वकं जले । कौतुकेन च सायाह्ने नगरात्सर्वदर्शनम् ॥१२३॥
मालाकारतन्तुवायकुब्जानां बन्धमोक्षणम् । धनुर्भङ्गं शङ्करस्य यागस्थान प्रदर्शनम् ॥१२४॥

हिंसनं गजमल्लानां दर्शनं नृपतेः पुरः । कंसस्य हिंसनं सद्यः पित्रोर्निगडमोक्षणम् ॥१२५॥
प्रबोधनं च युष्माकमुग्रसेनाभिषेचनम् । तस्यतस्य वधूनां च ज्ञानाच्छोकापनोदनम् ॥१२६॥
भ्रातुः स्वस्योपनयनं विद्यादानं गुरोर्मुखात् । गुरुपुत्रप्रदानं च पुनरागमनं गृहे ॥१२७॥
छलनं नृपसैन्यानां यवनस्य दुरात्मनः । निर्माणं द्वारकायाश्च मुचुकुन्दस्य मोक्षणम् ॥१२८॥
द्वारकागमनं चैव यादवैः सह कौतुकात् । स्त्रीसङ्घानां विहरणं ताभिः सार्द्धं च क्रीडनम् ॥१२९॥
सौभाग्यवर्धनं तासां पुत्रपौत्रादिकस्य च । मणिसम्बन्धिनो मिथ्याकलङ्ककस्य च मोक्षणम् ॥१३०॥
साहाय्यं पाण्डवानां च भारावतरणादिकम् । निष्पन्नं राजसूयस्य धर्मपुत्रस्य लीलया ॥१३१॥
पारिजातस्य हरणं शक्राहङ्कारमर्दनम् । व्रतपूर्णं च सत्याया बाणस्य भुजकृन्तनम् ॥१३२॥
मर्दनं शिवसैन्यानां हरस्य जृम्भणं परम् । हरणं बाणपुत्र्याश्चैवानिरुद्धस्य मोक्षणम् ॥१३३॥
वाराणस्याश्च दहनं विप्रदारिद्र्यभञ्जनम् । विप्रपुत्रप्रदानं च दुष्टानां दमनादिकम् ॥१३४॥
तीर्थयात्राप्रसङ्गेन युष्माभिः सह दर्शनम् । कृत्वा च राधया सार्धं व्रजमागमिता पुनः ॥१३५॥
प्रस्थापयित्वा द्वारां च परं नारायणांशकम् । सर्वं निष्पादनं कृत्वा गोलोकं राधया सह ॥१३६॥
गमिष्यत्येव गोलोकं नाथोऽयं जगतां पतिः । नारायणश्च वैकुण्ठं गमितास्म त्वया सह ॥१३७॥
धर्मगेहमृषी द्वौ च विष्णुः क्षीरोदमेव च । इत्येवं कथितं नन्द भविष्यं वेदनिर्णयम् ॥१३८॥
श्रूयतां सांप्रतं कर्म यदर्थं गमनं मम । माघशुक्लचतुर्दश्यां कुरु कर्म शुभे क्षणे ॥१३९॥
गुरुवारे च रेवत्यां विशुद्धे चन्द्रतारके । चन्द्रस्थे मीनलग्ने च लग्नेशपूर्णदर्शने ॥१४०॥
वणिजे करणोत्कृष्टे शुभयोगे मनोहरे । सुदुर्लभे दिने तत्र सर्वोत्कृष्टेपयोगिके ॥१४१॥
आलोच्य पण्डितैः सार्द्धं कुरु कर्म मुदाऽन्वितः । इत्युक्त्वा बहिरागत्य स उवाच मुनीश्वरः ॥१४२॥
हृष्टे नन्दो यशोदा च कर्मोद्योगं चकार ह । एतस्मिन्नन्तरे द्रष्टुं गर्गं गोपाश्च गोपिकाः ॥१४३॥
बालका बालिकाश्चैव आजग्मुर्नन्दमन्दिरम् । ददृशुस्ते मुनिश्रेष्ठं ग्रीष्ममध्याह्नभास्करम् ॥१४४॥
शिष्यसङ्घैः परिवृतं ज्वलन्तं ब्रह्मतेजसा । गूढयोगं प्रवोचन्तं सिद्धाय पृच्छते मुदा ॥१४५॥
पश्यन्तं सस्मितं नन्दभवनानां परिच्छदम् । स्वर्णसिंहासनस्थं च योगमुद्राधरं वरम् ॥१४६॥
भूतं भव्यं भविष्यं च पश्यन्तं ज्ञानचक्षुषा । हृदीश्वरं प्रपश्यन्तं सिद्धं मन्त्रप्रभावतः ॥१४७॥
बहिर्यशोदाक्रोडस्थं तादृशं सस्मितं शिशुम् । महेशदत्तध्यानेन यद्रूपं च निरूपितम् ॥१४८॥
तं दृष्ट्वा परमप्रीत्या पूर्णभूतमनोरथम् । साश्रुनेत्रं पुलकितं निमग्नं भक्तिसागरे ॥१४९॥
हृदि पूजां प्रणामं च कुर्वन्तं योगचर्यया । मूर्ध्ना प्रणेमुस्ते तं च स च तानाशिषं ददौ ॥१५०॥
आसनस्थो मुनिस्तस्थौ ते जग्मुः स्वालयं मुदा । नन्दः स्वानन्दयुक्तश्च बन्धून्मङ्गलपत्रिकाः ॥१५१॥
प्रस्थापयामास शीघ्रमाराद्दूरस्थितान्मुदा । दधिकुल्यां दुग्धकुल्यां घृतकुल्यां प्रपूरिताम् ॥१५२॥
गुडकुल्यां तैलकुल्यां मधुकुल्यां च विस्तृताम् । नवनीतकुल्यां पूर्णां च तक्रकुल्यां यदृच्छया ॥१५३॥
शर्करोदककुल्यां च परिपूर्णां च लीलया । तण्डुलानां च शालीनामुच्चैश्च शतपर्वतान् ॥१५४॥
पृथुकानां शैलशतं लवणानां च सप्त च । सप्तशैलाच्छर्कराणां लड् डुकानां च सप्त च ॥१५५॥
परिपक्वफलानां च तत्र षोडशपर्वतान् । यवगोधूमचूर्णानां पक्वलड्डुकपिण्डकान् ॥१५६॥
मोदकानां च शैलं च स्वस्तिकानां च पर्वतान् । कपर्दकानामत्युच्चैः शैलान्सप्त च नारद ॥१५७॥
कर्पूरादिकयुक्तानां तांबूलानां च मंदिरम् । विस्तृतं द्वारहीनं च वासितोदकसंयुतम् ॥१५८॥
चन्दनागुरुकस्तूरीकुङ्कुमेन समन्वितम् । नानाविधानि रत्नानि स्वर्णानि विविधानि च ॥१५९॥
मुक्ताफलानि रम्याणि प्रवालानि मुदान्वितः । नानाविधानि चारूणि वासांसि भूषणानि च ॥१६०॥
पुत्रान्नप्राशने नन्दः कारयामास कौतुकात् । संस्कारयुक्तं रुचिरं चन्दनद्रवचर्चितम् ॥१६१॥
प्राङ्गणं कदलीस्तम्भै रसालनवपल्लवैः । ग्रथितैः सूक्ष्मवस्त्रेण वेष्टयामास कौतुकात् ॥१६२॥
युक्तं मङ्गलकुम्भैश्च फलपल्लवसंयुतैः । चन्दनाऽगुरुकस्तूरीपुष्पमालाविराजितैः ॥१६३॥
माल्यानां वरवस्त्राणां राशिभिश्च विराजितम् । गवां च मधुपर्काणामासनानां च नारद ॥१६४॥
फलानां जलकुम्भानां समूहैश्च समन्वितम् । नानाप्रकारैर्वाद्यैश्च दुर्लभैः सुमनोहरैः ॥१६५॥
ढक्कानां दुन्दुभीनां च पटहानां तथैव च । मृदङ्गमुरजादीनामानकानां समूहकैः ॥१६६॥
वंशीसन्नहनीकांस्यशरयन्त्रैश्च शब्दितम् । विद्याधरीणां नृत्येन भृङ्गिमाभ्रमणेन च ॥१६७॥
गन्धर्वनायकानां च सङ्गीतैर्मूर्च्छनायुतैः । स्वर्णसिंहासनानां च रथानां निःस्वनैर्युतम् ॥१६८॥
एतस्मिन्नन्तरे नन्दमुवाच वाचको मुदा । आजग्मुर्बल्लवेन्द्राश्च बान्धवा बल्लवास्तथा ॥१६९॥
अश्वस्थाश्च गजस्थाश्च रथस्थाश्चेति सत्वरम् । आजग्मू राजपुत्राश्च रत्नालङ्कारभूषिताः ॥१७०॥
आगतो गिरिभानुश्च सस्त्रीकश्च सकिङ्करः । रथानां च चतुर्लक्षं गजानां च तथैव च ॥१७१॥
तुरङ्गमाणां कोटिश्च शिबिकानां तथैव च । ऋषीन्द्राणां मुनीन्द्राणां विप्राणां च विपश्चिताम् ॥१७२॥

बन्दिनां भिक्षुकाणां च समूहैश्च समीपतः । गोपानां गोपिकानां च संख्या कर्तुं च कः क्षमः ॥१७३॥
पश्यागत्य बहिर्भूयेत्युवाच प्राङ्गणे स्थितः । श्रुत्वैवं तानुपव्रज्य समानीय व्रजेश्वरः ॥१७४॥
प्राङ्गणे वासयामास पूजयामास सत्वरम् । ऋष्यादिकसमूहं च प्रणम्य शिरसा भुवि ॥
पाद्यादिकं च तेभ्यश्च प्रददौ सुसमाहितः ॥१७५॥
वस्तुभिर्बन्धुभिः पूर्णं बभूव नन्दगोकुलम् । न कोऽपि कस्य शब्दं च श्रोतुं शक्तश्च तत्र वै ॥१७६॥
त्रिमुहूर्तं कुबेरश्च श्रीकृष्णप्रीतये मुदा । चकार स्वर्णवृष्ट्या च परिपूर्णं च गोकुलम् ॥१७७॥
कौतुकापह्नवं चक्रुर्बन्धुवर्गाश्च क्रीडया । आनम्रकन्धराः सर्वे दृष्ट्वा नन्दस्य सम्पदम् ॥१७८॥
नन्दः कृताह्निकः पूतो धृत्वा धौते च वाससी । चन्दनागुरुकस्तूरी कुङ्कुमेनैव भूषितः ॥१७९॥
उवास पादौ प्रक्षाल्य स्वर्णपीठे मनोहरे । गर्गस्य च मुनीन्द्राणां गृहीत्वाऽऽज्ञां व्रजेश्वरः ॥१८०॥
संस्मृत्य विष्णुमाचान्तः स्वस्तिवाचनपूर्वकम् । कृत्वा कर्म च वेदोक्तं भोजयामास बालकम् ॥१८१॥
गर्गवाक्यानुसारेण बालकस्य मुदाऽन्वितः । कृष्णेति मङ्गलं नाम ररक्ष च शुभे क्षणे ॥१८२॥
सघृतं भोजयित्वा च कृत्वा नाम जगत्पतेः । वाद्यानि वादयामास कारयामास मङ्गलम् ॥१८३॥
नानाविधानि स्वर्णानि धनानि विविधानि च । भक्ष्यद्रव्याणि वासांसि ब्राह्मणेभ्यो ददौ मुदा ॥१८४॥
बन्दिभ्यो भिक्षुकेभ्यश्च सुवर्णं विपुलं ददौ । भाराक्रान्ताश्च ते सर्वे न शक्ता गन्तुमेव च ॥१८५॥
ब्राह्मणान्बन्धुवर्गांश्च भिक्षुकांश्च विशेषतः । मिष्टान्नं भोजयामास परिपूर्णं मनोहरम् ॥१८६॥
दीयतां दीयतां चैव खाद्यतां खाद्यतामिति । बभूव शब्दोऽत्युच्चैश्च सततं नन्दगोकुले ॥१८७॥
रत्नानि परिपूर्णानि वासांसि भूषणानि च । प्रवालानि सुवर्णानि मणिसाराणि यानि च ॥१८८॥
चारूणि स्वर्णपात्राणि कृतानि विश्वकर्मणा । गत्वा गर्गाय विनयं चकार व्रजपुङ्गवः ॥१८९॥
शिष्येभ्यः स्वर्णभाराणि प्रददौ विनयान्वितः । द्विजेभ्योऽप्यवशिष्टेभ्यः परिपूर्णानि नारद ॥१९०॥
श्रीनारायण उवाच ॥
गृहीत्वा श्रीहरिं गर्गो जगाम निभृतं मुदा । तुष्टाव परया भक्त्या प्रणम्य च तमीश्वरम् ॥१९१॥
साश्रुनेत्रः सपुलको भक्तिनम्रात्मकन्धरः । पुटाञ्जलियुतो भूत्वोवाच कृष्णपदांबुजे ॥१९२॥
गर्ग उवाच ॥
हे कृष्ण जगतां नाथ भक्तानां भयभञ्जन । प्रसन्नो भव मामीश देहि दास्यं पदाम्बुजे ॥१९३॥
त्वत्पित्रा मे धनं दत्तं तेन मे किं प्रयोजनम् । देहि मे निश्चलां भक्तिं भक्तानामभयप्रद ॥१९४॥
अणिमादिकसिद्धिषु योगेषु मुक्तिषु प्रभो । ज्ञानतत्त्वेऽमरत्वे वा किञ्चिन्नास्ति स्पृहा मम ॥१९५॥
इन्द्रत्वे वा मनुत्वे वा स्वर्गलोकफले चिरम् । नास्ति मे मनसो वाञ्छा त्वत्पादसेवनं विना ॥१९६॥
सालोक्यं सार्ष्टिसारूप्ये सामीप्यैकत्वमीप्सितम् । नाहं गृह्णामि ते ब्रह्मंस्त्वत्पादसेवनं विना ॥१९७॥
गोलोके वापि पाताले वासे नास्ति मनोरथः । किन्तु ते चरणाम्भोजे सन्ततं स्मृतिरस्तु मे ॥१९८॥
त्वन्मन्त्रं शङ्करात्प्राप्य कतिजन्मफलोदयात् । सर्वज्ञोऽहं सर्वदर्शी सर्वत्र गतिरस्तु मे ॥१९९॥
कृपां कुरु कृपासिन्धो दीनबन्धो पदाम्बुजे । रक्ष मामभयं दत्त्वा मृत्युर्मे किं करिष्यति ॥२००॥
सर्वेषामीश्वरः सर्वस्त्वत्पादाम्भोजसेवया । मृत्युञ्जयोऽन्तकालश्च बभूव योगिनां गुरुः ॥२०१॥
ब्रह्मा विधाता जगतां त्वत्पादाम्भोजसेवया । यस्यैकदिवसे ब्रह्मन्पतन्तीन्द्राश्चतुर्दश ॥२०२॥
त्वत्पादसेवया धर्मः साक्षी च सर्वकर्मणाम् । पाता च फलदाता च जित्वा कालं सुदुर्जयम् ॥२०३॥
सहस्रवदनः शेषो यत्पादाम्बुजसेवया । धत्ते सिद्धार्थवद्विश्वं शिवः कण्ठे विषं यथा ॥२०४॥
सर्वसंपद्विधात्री या देवीनां च परात्परा । करोति सततं लक्ष्मीः केशैस्त्वत्पादमार्जनम् ॥२०५॥
प्रकृतिर्बीजरूपा सा सर्वेषां शक्तिरूपिणी । स्मारंस्मारं त्वत्पदाब्जं बभूव तत्परा वरा ॥२०६॥
पार्वती सर्वरूपा सा सर्वेषां बुद्धिरूपिणी । त्वत्पादसेवया कान्तं ललाभ शिवमीश्वरम् ॥२०७॥
विद्याधिष्ठात्री देवी या ज्ञानमाता सरस्वती । पूज्या बभूव सर्वेषां संपूज्य त्वत्पदाम्बुजम् ॥२०८॥
सावित्री वेदजननी पुनाति भुवनत्रयम् । ब्रह्मणो ब्राह्मणानां च गतिस्त्वत्पादसेवया ॥२०९॥
क्षमा जगद्विभर्तुं च रत्नगर्भा वसुन्धरा । प्रसूतिः सर्वसस्यानां त्वत्पादपद्मसेवया ॥२१०॥
राधा ममांशसंभूता तव तुल्या च तेजसा । स्थित्वा वक्षसि ते पादं सेवतेऽन्यस्य का कथा ॥२११॥
यथा शर्वादयो देवा देव्यः पद्मादयो यथा । सनाथं कुरु मामीश ईश्वरस्य समा कृपा ॥२१२॥
न यास्यामि गृहं नाथ न गृह्णामि धनं तव । कृत्वा मां रक्ष पादाब्जसेवायां सेवकं रतम् ॥२१३॥
इति स्तुत्वा साश्रुनेत्रः पपात चरणे हरेः । रुरोद च भृशं भक्त्या पुलकाञ्चितविग्रहः ॥२१४॥
गर्गस्य वचनं श्रुत्वा जहास भक्तवत्सलः । उवाच तं स्वयं कृष्णो मयि ते भक्तिरस्त्विति ॥२१५॥
इदं गर्गकृतं स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः । दृढां भक्तिं हरेर्दास्यं स्मृतिं च लभते ध्रुवम् ॥२१६॥
जन्ममृत्युजरारोगशोकमोहादिसङ्कटात् । तीर्णो भवति श्रीकृष्णदाससेवनतत्परः ॥२१७॥

कृष्णस्य सहकालं च कृष्णसार्द्धं च मोदते । कदाचिन्न भवेत्तस्य विच्छेदो हरिणा सह ॥२१८॥
श्रीनारायण उवाच ॥
हरिं मुनिः स्तवं कृत्वा ददौ नन्दाय तं मुदा । उवाच तं गृहं यामि कुर्वाज्ञामिति बल्लव ॥२१९॥
अहो विचित्रं संसारो मोहजालेन वेष्टितः । संमीलनं च विरहो नराणां सिन्धुफेनवत् ॥२२०॥
गर्गस्य वचनं श्रुत्वा रुरोद नन्द एव च । सद्विच्छेदो हि साधूनां मरणादतिरिच्यते ॥२२१॥
सर्वशिष्यैः परिवृतं मुनीन्द्रं गन्तुमुद्यतम् । सर्वे नन्दादयो गोपा रुदन्तौ गोपिकास्तदा ॥२२२॥
प्रणेमुः परमप्रीत्या चक्रुस्तं विनयं मुने । दत्त्वाऽऽशिषं मुनिश्रेष्ठो जगाम मथुरां मुदा ॥२२३॥
ऋषयो मुनयश्चैव बन्धुवर्गाश्च बल्लवाः । सर्वे जग्मुर्धनैः पूर्णाः स्वालयं हृष्टमानसाः ॥२२४॥
प्रजग्मुर्बन्दिनः सर्वे परिपूर्णमनोरथाः । मिष्टद्रव्यांशुकोत्कृष्टतुरगस्वर्णभूषणैः ॥२२५॥
आकण्ठपूर्णा भुक्त्या च भिक्षुका गन्तुमक्षमा । स्वर्णवस्त्रभरोद्रेकपरिश्रान्ता मुदाऽन्विताः ॥२२६॥
सुमन्दगामिनः केचित्केचिद्भूमौ च शेरते । केचिद्वर्त्मनि तिष्ठन्तश्चोत्तिष्ठन्तश्च केचन ॥२२७॥
केचिद्दूषुः प्रमुदिता हसन्तस्तत्र केचन । कपर्दकानां वस्तूनां शेषांश्चोर्वरितान्बहून् ॥२२८॥
केचित्तानाददुः स्थित्वा दर्शयन्तश्च केचन । केचिन्नृत्यं प्रकुर्वन्तो गायन्तस्तत्र केचन ॥२२९॥
केचिद्बहुविधा गाथाः कथयन्तः पुरातनाः । मरुत्तश्वेतसगरमान्धातृणां च भूभृताम् ॥२३०॥
उत्तानपादनहुषनलादीनां च याः कथाः । श्रीरामस्याश्वमेधस्य रन्तिदेवस्य कर्मणाम् ॥२३१॥
येषांयेषां नृपाणां च श्रुता वृद्धमुखात्कथाः । कथयन्तश्च ताः केचिच्छ्रुतवन्तश्च केचन ॥२३२॥
स्थायंस्थायं गताः केचित्स्वापंस्वापं च केचन । एवं सर्वे प्रमुदिताः प्रजग्मुः स्वालयं मुदा ॥२३३॥
हृष्टो नन्दो यशोदा च बालं कृत्वा च वक्षसि । तस्थौ स्वमन्दिरे रम्ये कुबेरभवनोपमे ॥२३४॥
एवं प्रवर्द्धितौ बालौ शुक्लचन्द्रकलोपमौ । गवां पुच्छं च भित्तिं च धृत्वा चोत्तस्थतुर्मुदा ॥२३५॥
शब्दार्द्धं वा तदर्द्धं वा क्षमौ वक्तुं दिनेदिने । पित्रोर्हर्षं च वर्द्धन्तौ गच्छन्तौ प्राङ्गणे मुने ॥२३६॥
बालो द्विपादं पादं वा गन्तुं शक्तो बभूव ह । गन्तुं शक्तो हि जानुभ्यां प्राङ्गणे वा गृहे हरिः ॥२३७॥
वर्षवधिको हि वयसा कृष्णात्सङ्कर्षणः स्वयम् । ततो मुदं वर्द्धयन्तौ वर्द्धितौ च दिनेदिने ॥२३८॥
व्रजन्तौ गोकुले बालौ प्रहृष्टगमने क्षमौ । उक्तवन्तौ स्फुटं वाक्यं माया बालकविग्रहौ ॥२३९॥
गर्गो जगाम मथुरां वसुदेवाश्रमं मुने । स तं ननाम पप्रच्छ पुत्रयोः कुशलं तयोः ॥२४०॥
मुनिस्तं कथयामास कुशलं सुमहोत्सवम् । आनन्दाश्रुनिमग्नश्च श्रुतमात्राद्बभूव ह ॥२४१॥
देवकी परमप्रीत्या पप्रच्छ च पुनःपुनः । आनन्दाश्रुनिमग्ना सा रुरोद च मुहुर्मुहुः ॥२४२॥
गर्गस्तावाशिषं दत्त्वा जगाम स्वालयं मुदा । स्वगृहे तस्थतुस्तौ च कुबेरभवनोपमे ॥२४३॥
श्रीनारायण उवाच ॥
यत्र कल्पे कथा चेयं तत्र त्वमुपबर्हणः । पञ्चाशत्कामिनीनां च पतिर्गन्धर्वपुङ्गवः ॥२४४॥
तासां प्राणाधिकस्त्वं च शृङ्गारनिपुणो युवा । ततोऽभूद्ब्रह्मणः शापाद्दासीपुत्रो द्विजस्य च ॥२४५॥
ततोऽधुना ब्रह्मपुत्रो वैष्णवोच्छिष्टभोजनात् । सर्वदर्शी च सर्वज्ञः स्मारको हरिसेवया ॥२४६॥
कथितं कृष्णचरितं नामान्नप्राशनादिकम् । जन्ममृत्युजरातिघ्नमपरं कथयामि ते ॥२४७॥

इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवादे
कृष्णान्नप्राशन वर्णननामकरणप्रस्तावो नाम त्रयोदशोऽध्यायः ॥१३॥
आदितः श्लोकानां समष्ट्यङ्काः-१०,९९०+२४७=११,२३७



## ॥ अथ चतुर्दशोऽध्यायः ॥

श्रीनारायण उवाच ॥
एकदा नन्दपत्नी च स्नानार्थं यमुनां ययौ । गव्यपूर्णं गृहं दृष्ट्वा जहास मधुसूदनः ॥१॥
दधिदुग्धाज्यतक्रं च नवनीतं मनोरमम् । गृहस्थितं च यत्किञ्चिच्चखाद मधुसूदनः ॥२॥
मधु हैयङ्गवीनं यत्स्वस्तिकं शकटस्थितम् । भुक्त्वा पीत्वांऽशुकैर्वक्त्रसंस्कारं कर्तुमुद्यतम् ॥३॥
ददर्श बालकं गोपी स्नात्वाऽऽगत्य स्वमन्दिरम् । गव्यशून्यं भग्नभाण्डं मध्वादिरिक्तभाजनम् ॥४॥
दृष्ट्वा पप्रच्छ बालांश्च अहो कर्मेदमद्भुतम् । यूयं वदत सत्यं च कृतं केन सुदारुणम् ॥५॥
यशोदावचनं श्रुत्वा सर्वमूचुश्च बालकाः । चखाद सत्यं बालस्ते नास्मभ्यं दत्तमेव च ॥६॥
बालानां वचनं श्रुत्वा चुकोप नन्दगेहिनी । वेत्रं गृहीत्वा दुद्राव रक्तपङ्कजलोचना ॥७॥
पलायमानं गोविन्दं ग्रहीतुं न शशाक ह । ध्यानासाध्यं शिवादीनां दुरापमपि योगिनाम् ॥८॥
यशोदा भ्रमणं कृत्वा विश्रान्ता घर्मसंयुता । तस्थौ कोपपरी तात्मा शुष्ककण्ठौष्ठतालुका ॥९॥

विश्रान्तां मातरं दृष्ट्वा कृपालुः पुरुषोत्तमः । संतस्थौ पुरतो मातुः सस्मितो जगदीश्वरः ॥१०॥
करे धृत्वा च तं देवी समानीय स्वमालयम् । बद्ध्वा वस्त्रेण वृक्षे च तताड मधुसूदनम् ॥११॥
बद्ध्वा कृष्णं यशोदा सा जगाम स्वालयं प्रति । हरिस्तस्थौ वृक्षमूले जगतां पतिरीश्वरः ॥१२॥
श्रीकृष्णस्पर्शमात्रेण सहसा तत्र नारद । पपात वृक्षः शैलाभः शब्दं कृत्वा भयानकम् ॥१३॥
सुवेषः पुरुषो दिव्यो वृक्षादाविर्बभूव ह । दिव्यस्यन्दनमारुह्य जगाम स्वालयं पुरः ॥१४॥
प्रणम्य जगतीनाथं शातकौम्भपरिच्छदम् । किशोरः सस्मितो गौरो रत्नालङ्कारभूषितः ॥१५॥
सा वृक्षपतनं दृष्ट्वा भिया त्रस्ता व्रजेश्वरी । क्रोडे चकार बालं तं रुदन्तं श्यामसुन्दरम् ॥१६॥
आजग्मुर्गोकुलस्थाश्च गोपा गोप्यश्च तद्गृहम् । यशोदां भर्त्सयामासुः शान्तिं चक्रुः शिशोर्मुदा ॥१७॥
अत्यन्तस्थविरे काले तनयोऽयं बभूव ह । धनं धान्यं च रत्नं वा तत्सर्वं पुत्रहेतुकम् ॥१८॥
सुमतिर्नास्ति ते सत्यं ज्ञातं नन्दव्रजेश्वरि । न भक्षितं यत्पुत्रेण तत्सर्वं निष्फलं भुवि ॥१९॥
पुत्रं बद्ध्वा गव्यहेतोर्वृक्षमूले च निष्ठुरे । गृहकर्मणि व्यग्रायां दैवाद्वृक्षः पपात ह ॥२०॥
वृक्षस्य पतनाद्गोपी भाग्याद्बालोऽपि जीवितः । प्रनष्टे बालके मूढे वस्तूनां किं प्रयोजनम् ॥२१॥
आशिषं युयुजुर्विप्रा बन्दिनश्च शुभावहाम् । द्विजेन कारयामासुर्नामसङ्कीर्तनं हरेः ॥२२॥
एवं कृत्वा जनाः सर्वे प्रययुर्निजमन्दिरम् । उवाच पत्नीं नन्दश्च रक्तपङ्कजलोचनः ॥२३॥

नन्द उवाच ॥

यास्यामि तीर्थमद्यैव कण्ठे कृत्वा तु बालकम् । अथवा त्वं गृहाद्गच्छ त्वया मे किं प्रयोजनम् ॥२४॥
शतकूपाधिका वापी शतवापीसमं सरः । सरःशताधिको यज्ञः पुत्रो यज्ञशताधिकः ॥२५॥
तपोदानोद्भवं पुण्यं जन्मान्तरसुखप्रदम् । सुखप्रदोऽपि सत्पुत्र इहैव च परत्र च ॥२६॥
पुत्रादपि परो बन्धुर्न भूतो न भविष्यति । एवमुक्त्वा स्वभार्यां च तस्थौ नन्दः स्वमन्दिरे ।
यशोदा रोहिणी चैव नियुक्ता गृहकर्मणि ॥२७॥

नारद उवाच ॥

सुवेषः पुरुषः को वा वृक्षरूपी च गोकुले । भगवन्हेतुना केन वृक्षत्वं समवाप ह ॥२८॥

नारायण उवाच ॥

कुबेरतनयः श्रीमान्नाम्ना यो नलकूबरः । जगाम नन्दनवनं क्रीडार्थं सह रम्भया ॥२९॥
निर्जने सरसस्तीरे पुष्पोद्याने मनोहरे । वटवृक्षसमीपे च सौरभे पुष्पवायुना ॥३०॥
विधाय पुष्पशयने रत्नदीपैश्च दीपितम् । चन्दनागुरुकस्तूरीकुङ्कुमद्रवसंयुतम् ॥३१॥
परितः पुष्पमाल्यैश्च क्षौमवस्त्रैश्च वेष्टितम् । तत्र रम्भां समानीय विजहार यथेच्छया ॥३२॥
शृङ्गाराष्टप्रकारं च विपरीतादिकं सुखम् । चुम्बनं षट्प्रकारं च यथास्थाने निरूपितम् ॥३३॥
अङ्ग प्रत्यङ्गसंयोगत्रिविधाश्लेषणं मुदा । नखदन्तकरक्रीडां चकार रसिकेश्वरः ॥३४॥
जलात्स्थले स्थलात्तोये कामशास्त्रविशारदः । रतिभोगप्रकुर्वन्तं ददर्श देवलो मुनिः ॥३५॥
नग्नां रम्भां मुक्तकेशीं पीनश्रोणिपयोधराम् । नखदन्तक्षताङ्गीं च पुलकाञ्चितविग्रहाम् ॥३६॥
पश्यन्तीं प्राणनाथं च पश्यन्तं सस्मितं मुदा । वक्रभ्रूभङ्गसंयुक्तां कामुकीं च ददर्श ताम् ॥३७॥
रत्नकुण्डलयुग्मेन गण्डस्थलविराजिताम् । विचित्ररत्नमाल्यैश्च पुष्पमाल्यैश्च भूषिताम् ॥३८॥
किङ्किणीजालसंयुक्तां सिन्दूर बिन्दुसंयुताम् । तया युक्तं पुलकितं नोत्तिष्ठन्तं स्मरान्वितम् ॥३९॥
वृक्षत्वं याहि पापिष्ठेत्युवाच मुनिपुंगवः । शशाप रम्भां कामार्तां मानुषी त्वं भवेति च ॥४१॥
जन्मेजयस्य सुभगा भविता कामिनीति च । त्वमेव गोकुलं गच्छ वृक्षरूपी भवेति च ॥४१॥
श्रीकृष्ण स्पर्शमात्रेण पुनरायास्यसि गृहम् । रम्भे त्वमिन्द्रसंयोगात्पुनरायास्यसि ध्रुवम् ॥४२॥
इत्येवमुक्त्वा स मुनिर्जगाम निजमन्दिरम् । कुबेरतनयः श्रीमान्सजगाम निजालयम् ॥४३॥
इत्येवं कथितं विप्र रम्भाख्यानं वदामि ते । सुचन्द्रस्य गृहे रम्भा ललाभ जन्म भारते ॥४४॥
कन्या लक्ष्मीस्वरूपा च बभूव सुन्दरी वरा । तां च सालङ्कृतां कृत्वा सुचन्द्रो नृपतीश्वरः ॥४५॥
नानाकौतुकसंयुक्तां ददौ जन्मेजयाय च । जन्मेजयस्य सुभगा बभूव महिषी वरा ॥४६॥
स्थानेस्थाने निर्जने च राजा रेमे तया सह । एकदा नृपतिश्रेष्ठश्चाश्वमेधेन दीक्षितः ॥४७॥
अश्वसंगोपनं कृत्वा तस्थौ शक्रश्च मन्दिरे । यज्ञाश्वं रुचिरं मत्वा कौतुकेन च सुन्दरी ॥४८॥
द्रष्टुं जगाम सा साध्वी चाश्वमेकाकिनी मुदा । शक्रोऽश्वनिकटे भूत्वा धर्षयामास तां सतीम् ॥४९॥
तया निवार्यमाणश्च रेमे तत्र तया सह । मूर्च्छामवाप शक्रश्च बुबुधे न दिवानिशम् ॥५०॥
सा च संभोगमात्रेण देहं तत्याज योगतः । नृपस्य लज्जया भीत्या शक्रः स्वर्गं जगाम ह ॥५१॥
राजा श्रुत्वा मृतां दृष्ट्वा विललाप भृशं मुहुः । यज्ञं समाप्य विप्रेभ्यो ददौ पूर्णां च दक्षिणाम् ॥५२॥
रम्भा च मानवं देहं त्यक्त्वा स्वर्गं जगाम ह । इत्येवं कथितं सर्वं वृक्षार्जुनविभञ्जनम् ॥५३॥

नलकूबरमोक्षश्च रम्भायाश्च महामुने । पुण्यदं कृष्णचरितं जन्ममृत्युजरापहम्॥
इत्येवं कथितं सर्वमपरं कथयामि ते ॥५४॥
इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवादे वृक्षार्जुनभञ्जनं नाम चतुर्दशोऽध्यायः ॥१४॥
आदितः श्लोकानां समष्टयङ्काः-११,२३७+५४=११,२९१



## ॥ अथ पञ्चदशोऽध्यायः ॥

श्रीनारायण उवाच ॥
एकदा कृष्णसहितो नन्दो वृन्दावनं ययौ । तत्रोपवनभाण्डीरे चारयामास गोधनम्॥१॥
सरः सुस्वादुतोयं च पाययामास तत्पपौ । उवास वृक्षमूले च बालं कृत्वा स्ववक्षसि ॥२॥
एतस्मिन्नन्तरे कृष्णो मायामानुषविग्रहः । चकार माययाऽकस्मान्मेघाच्छन्नं नभो मुने ॥३॥
मेघावृतं नभो दृष्ट्वा श्यामलं काननान्तरम् । झंझावातं महाशब्दं वज्रशब्दं च दारुणम् ॥४॥
वृष्टिधारामतिस्थूलां कम्पमानांश्च पादपान् । दृष्ट्वैवं पतितस्कन्धान्नन्दो भयमवाप ह ॥६३॥
कथं यास्यामि गोवत्सान्विहाय स्वाश्रमं बत । गृहं यदि न यास्यामि भविता बालकस्य किम् ॥६॥
एवं नन्दे प्रवदति रुरोद श्रीहरिस्तदा । पयोभिया हरिश्चैव पितुः कण्ठं दधार सः ॥७॥
एतस्मिन्नन्तरे राधाऽऽजगाम कृष्ण सन्निधिम् । गमनं कुर्वती राजहंसखञ्जनगञ्जनम्॥८॥
शरत्पार्वणचन्द्राभामुष्टवक्त्रमनोहरा । शरन्मध्याह्नपद्मानां शोभामोचनलोचना ॥९॥
परितस्तारकापक्ष्मविचित्रकज्जलोज्ज्वला । खगेन्द्रचञ्चुचारुश्रीशंसानाशकनासिका ॥१०॥
तन्मध्यस्थलशोभार्ह स्थूलमुक्ताफलोज्ज्वला । कबरीवेषसंयुक्ता मालतीमाल्यवेष्टिता ॥११॥
ग्रीष्ममध्याह्नमार्तण्डप्रभामुष्टककुण्डला । पक्वबिम्बफलानां च श्रीमुष्टाधरयुग्मका ॥१२॥
मुक्तापङ्क्तिप्रभातैकदन्तपङ्क्तिसमुज्ज्वला । ईषत्प्रफुल्लकुन्दानां सुप्रभानाशकस्मिता ॥१३॥
कस्तूरीबिन्दुसंयुक्त सिन्दूरबिन्दुभूषिता । कपालं मल्लिकायुक्तं बिभ्रती श्रीयुतं सती ॥१४॥
सुचारुवर्तुलाकारकपोलपुलकान्विता । मणिरत्नेन्द्रसाराणां हारोरःस्थलभूषिता ॥१५॥
सुचारुश्रीफलयुगकठिनस्तनसङ्गता । पत्रावलीश्रिया युक्ता दीप्ता सद्रत्नतेजसा ॥१६॥
सुचारुवर्तुलाकारमुदरं सुमनोहरम् । विचित्रत्रिवलीयुक्तं निम्ननाभिं च बिभ्रती ॥१७॥
सद्रत्नसाररचितमेखलाजालभूषिता । कामास्त्रसारभूभङ्गयोगीन्द्रचित्तमोहिनी ॥१८॥
कठिनश्रोणियुगलं धरणीधरनिन्दितम् । स्थलपद्मप्रभामुष्टचरणं दधती मुदा ॥१९॥
रत्नभूषणसंयुक्तं यावकद्रवसंयुतम् । मणीन्द्रशोभासंमुष्टसालक्तकपुनर्भवम्॥२०॥
सद्रत्नसाररचितक्वणन्मञ्जीर रञ्जितम् । रत्नकङ्कणकेयूरचारुशङ्खविभूषिता ॥२१॥
रत्नाङ्गुलीयनिकरवह्निशुद्धांशुकोज्वला । चारुचम्पकपुष्पाणां प्रभा मुष्टकलेवरा ॥२२॥
सहस्रदलसंयुक्तक्रीडाकमलमुज्ज्वलम् । श्रीमुखश्रीदर्शनार्थं बिभ्रती रत्नदर्पणम्॥२३॥
दृष्ट्वा तां निर्जने नन्दो विस्मयं परमं ययौ । चन्द्रकोटिप्रभामुष्टां भासयन्तीं दिशो दश ॥२४॥
ननाम तां साश्रुनेत्रो भक्तिनम्रात्मकन्धरः । जानामि त्वां गर्गमुखात्पद्माधिकप्रियां हरेः ॥२५॥
जानामीमं महाविष्णोः परं निर्गुणमच्युतम् । तथापि मोहितोऽहं च मानवो विष्णुमायया ॥२६॥
गृहाण प्राणनाथं च गच्छ भद्रे यथासुखम् । पश्चाद्दास्यसि मत्पुत्रं कृत्वा पूर्णमनोरथम् ॥२७॥
इत्युक्त्वा प्रददौ तस्यै रुदन्तं बालकं भिया । जग्राह बालकं राधा जहास मधुरं सुखात्॥२८॥
उवाच नन्दं सा यत्नान्न प्रकाश्यं रहस्यकम् । अहं दृष्टा त्वया नन्द कतिजन्मफलोदयात्॥२९॥
प्राज्ञस्त्वं गर्गवचनात्सर्वं जानासि कारणम् । अकथ्यमावयोर्गोप्यं चरितं गोकुले व्रज ॥३०॥
वरं वृणु व्रजेश त्वं यत्ते मनसि वाञ्छितम् । ददामि लीलया तुभ्यं देवानामपि दुर्लभम्॥३१॥
राधिकावचनं श्रुत्वा तामुवाच व्रजेश्वरः । युवयोश्चरणे भक्तिं देहि नान्यत्र मे स्पृहा ॥३२॥
युवयोः सन्निधौ वासं दास्यसि त्वं सुदुर्लभम् । आवाभ्यां देहि जगतामम्बिके परमेश्वरि ॥३३॥
श्रुत्वा नन्दस्य वचनमुवाच परमेश्वरी । दास्यामि दास्यमतुलमिदानीं भक्तिरस्तु ते ॥३४॥
आवयोश्चरणाम्भोजे युवयोश्च दिवानिशम् । प्रफुल्लहृदये शश्वत्स्मृतिरस्तु सुदुर्लभा ॥३५॥
माया युवां च प्रच्छन्नौ न करिष्यति मद्वरात् । गोलोके यास्यथान्ते च विहाय मानवीं तनुम्॥३६॥
एवमुक्त्वा तु सानन्दं कृत्वा कृष्णं स्ववक्षसि । दूरं निनाय श्रीकृष्णं बाहुभ्यां च यथेप्सितम्॥३७॥
कृत्वा वक्षसि तं कामाच्छ्लेषंश्लेषं चुचुम्ब च । पुलकाङ्कितसर्वाङ्गी सस्मार रासमण्डलम्॥३८॥
एतस्मिन्नन्तरे राधा मायासद्रत्नमण्डपम् । ददर्श रत्नकलशशतेन च समन्वितम्॥३९॥
नानाविचित्रचित्राढ्यं चित्रकाननशोभितम् । सिन्दूराकारमणिभिः स्तम्भसङ्घैर्विराजितम्॥४०॥

चन्दनागुरुकस्तूरीकुङ्कुमद्रवयुक्तया । संयुक्तं मालतीमालासमूहपुष्पशय्यया ॥४१॥
नानाभोगसमायुक्तं दिव्यदर्पणसंयुतम् । मणीन्द्रमुक्तामाणिक्यमालाजालैर्विभूषितम् ॥४२॥
मणीन्द्रसाररचितकपाटेन समन्वितम् । भूषितं भूषितैर्वस्त्रैः पताकानिकरैर्वरैः ॥
कुङ्कुमाकारमणिभिः सप्तसोपानसंयुतम् ॥४३॥
युक्तं षट्पदसंयुक्तैः पुष्पोद्यानं च पुष्पितैः । सा देवी मण्डपं दृष्ट्वा जगामाभ्यन्तरं मुदा ॥४४॥
ददर्श तत्र ताम्बूलं कर्पूरादिसमन्वितम् । जलं च रत्नकुम्भस्थं स्वच्छं शीतं मनोहरम् ॥४५॥
सुधामधुभ्यां पूर्णानि रत्नकुम्भानि नारद । पुरुषं कमनीयं च किशोर श्यामसुन्दरम् ॥४६॥
कोटिकन्दर्पलीलाभं चन्दनेन विभूषितम् । शयानं पुष्पशय्यायां सस्मितं सुमनोहरम् ॥४७॥
पीतवस्त्रपरीधानं प्रसन्नवदनेक्षणम् । मणीन्द्रसारनिर्माणं क्वणन्मञ्जीररञ्जितम् ॥४८॥
सद्रत्नसारनिर्माणकेयूरवलयान्वितम् । मणीन्द्रकुण्डलाभ्यां च गण्डस्थलविराजितम् ॥४९॥
कौस्तुभेन मणीन्द्रेण वक्षःस्थलसमुज्ज्वलम् । शरत्पार्वणचन्द्रास्यप्रभामुष्टमुखोज्ज्वलम् ॥५०॥
शरत्प्रफुल्लकमलप्रभामोचनलोचनम् । मालतीमाल्यसंश्लिष्टशिखिपिच्छसुशोभितम् ॥५१॥
त्रिवंकचूडां बिभ्रन्तं पश्यन्तं रत्नमन्दिरम् । क्रोडं बालकशून्यं च दृष्ट्वा तं नवयौवनम् ॥५२॥
सर्वस्मृतिस्वरूपा सा तथापि विस्मयं ययौ । रूपं रासेश्वरी दृष्ट्वा मुमोह सुमनोहरम् ॥५३॥
कामाच्चक्षुश्चकोराभ्यां मुखचन्द्रं पपौ मुदा । निमेषरहिता राधा नवसंगमलालसा ॥५४॥
पुलकाङ्कितसर्वाङ्गी सस्मिता मदनातुरा । तामुवाच हरिस्तत्र स्मेराननसरोरुहाम् ॥
नवसङ्गमयोग्यां च पश्यन्तीं वक्रचक्षुषा ॥५५॥
श्रीकृष्ण उवाच ॥
राधे स्मरसि गोलोकवृत्तान्तं सुरसंसदि ॥५६॥
अद्य पूर्णं करिष्यामि स्वीकृतं यत्पुरा प्रिये । त्वं मे प्राणाधिका राधे प्रेयसी च वरानने ॥५७॥
यथा त्वं च तथाऽहं च भेदो हि नावयोर्ध्रुवम् । यथा क्षीरे च धावल्यं यथाऽग्नौ दाहिका सति ॥५८॥
यथा पृथिव्यां गन्धश्च तथाऽहं त्वयि संततम् । विना मृदा घटं कर्तुं विना स्वर्णेन कुण्डलम् ॥५९॥
कुलालः स्वर्णकारश्च नहि शक्तः कदाचन । तथा त्वया विना सृष्टिमहं कर्तुं न च क्षमः ॥६०॥
सृष्टेराधारभूता त्वं बीजरूपोऽहमच्युतः । आगच्छ शयने साध्वि कुरु वक्षःस्थले हि माम् ॥६१॥
त्वं मे शोभा स्वरूपाऽसि देहस्य भूषणं यथा । कृष्णं वदान्त मां लोकास्त्वयैव रहितं यदा ॥६२॥
श्रीकृष्णं च तदा तेऽपि त्वयैव सहितं परम् । त्वं च श्रीस्त्वं च संपत्तिस्त्वमाधारस्वरूपिणी ॥६३॥
सर्वशक्तिस्वरूपासि सर्वरूपोऽहमक्षरः । यदा तेजःस्वरूपोऽहं तेजोरूपाऽसि त्वं तदा ॥६४॥
न शरीरी यदाहं च तदा त्वमशरीरिणी । सर्वबीजस्वरूपोऽहं सदा योगेन सुन्दरि ॥६५॥
त्वं च शक्तिस्वरूपा च सर्वस्त्रीरूपधारिणी । ममाङ्गांशस्वरूपा त्वं मूलप्रकृतिरीश्वरी ॥६६॥
शक्त्या बुद्ध्या च ज्ञानेन मया तुल्या वरानने । आवयोर्भेदबुद्धिं च यः करोति नराधमः ॥६७॥
तस्य वासः कालसूत्रे यावच्चन्द्रदिवाकरौ । पूर्वान्सप्त परान्सप्त पुरुषान्पातयत्यधः ॥६८॥
कोटिजन्मार्जितं पुण्यं तस्य नश्यति निश्चितम् । अज्ञानादावयोर्निन्दां ये कुर्वन्ति नराधमाः ॥६९॥
पच्यन्ते नरके घोरे यावच्चन्द्रदिवाकरौ । राशब्दं कुर्वतस्त्रस्तो ददामि भक्तिमुत्तमाम् ॥७०॥
धाशब्दं कुर्वतः पश्चाद्यामि श्रवणलोभतः । ये सेवन्ते च दत्त्वा मामुपचारांश्च षोडश ॥
यावजीवनपर्यन्तं या प्रीतिर्जायते मम ॥७१॥
सा प्रीतिर्मम जायेत राधाशब्दात्ततोऽधिका । प्रिया न मे तथा राधे राधावक्ता ततोऽधिकः ॥७२॥
ब्रह्मानन्तः शिवो धर्मो नरनारायणावृषी । कपिलश्च गणेशश्च कार्तिकेयश्च मत्प्रियः ॥७३॥
लक्ष्मीः सरस्वती दुर्गा सावित्री प्रकृतिस्तथा । मम प्रियाश्च देवाश्च तास्तथापि न तत्समाः ॥७४॥
ते सर्वे प्राणतुल्या मे त्वं मे प्राणाधिका सती । भिन्नस्थानस्थितास्ते च त्वं च वक्षःस्थले स्थिता ॥७५॥
या मे चतुर्भुजा मूर्तिर्बिभर्ति वक्षसि प्रियाम् । सोऽहं कृष्णस्वरूपस्त्वां विवहामि स्वयं सदा ॥७६॥
इत्येवमुक्त्वा श्रीकृष्णस्तस्थौ तल्पे मनोरमे । उवाच राधिका नाथं भक्तिनम्रात्मकन्धरा ॥७७॥
राधिकोवाच ॥
स्मरामि सर्वं जानामि विस्मरामि कथं विभो । यत्त्वं वदसि सर्वाहं त्वत्पादाब्जप्रसादतः ॥७८॥
ईश्वरस्याप्रियाः केचित्प्रियाश्च कुत्र केचन । ये यथा मां न स्मरन्ति तथा तेषु तवाकृपा ॥७९॥
तृणं च पर्वतं कर्तुं समर्थः पर्वतं तृणम् । तथापि योग्यायोग्ये च संपत्तौ च समा कृपा ॥८०॥
तिष्ठत्यहं शयानस्त्वं कथाभिर्यत्क्षणं गतम् । तत्क्षणं च युगसमं नाहं प्रापयितुं क्षमा ॥८१॥
वक्षःस्थले च शिरसि देहि ते चरणाम्बुजम् । दुनोति मन्मनः सद्यस्त्वदीयविरहानलात् ॥८२॥
पुरः पपात मे दृष्टिस्त्वदीयचरणाम्बुजे । नीता मया नहि क्लेशाद्द्रष्टुमन्यत्कलेवरम् ॥८३॥

प्रत्येकमङ्गं दृष्ट्वैव दत्ता शान्ते मुखाम्बुजे । दृष्ट्वा मुखारविन्दं च नान्यं गन्तुं च सा क्षमा ॥८४॥
राधिकावचनं श्रुत्वा जहास पुरुषोत्तमः । तामुवाच हितं तथ्यं श्रुतिस्मृतिनिरूपितम् ॥८५॥
श्रीकृष्ण उवाच ॥
न खण्डनीयं तत्तत्र मया पूर्वं निरूपितम् । तिष्ठ भद्रे क्षणं भद्रं करिष्यामि तव प्रिये ॥८६॥
त्वन्मनोरथपूर्णस्य स्वयं कालः समागतः । यस्य यल्लिखितं पूर्वं यत्र काले निरूपितम् ॥८७॥
तदेव खण्डितुं राधे क्षमो नाहं च को विधिः । विधातुश्च विधाताऽहं येषां यल्लेखनं कृतम् ॥८८॥
ब्रह्मादीनां च क्षुद्राणां न तत्खण्डयं कदाचन । एतस्मिन्नन्तरे ब्रह्माऽऽजगाम पुरतो हरेः ॥८९॥
मालाकमण्डलुकर ईषत्स्मेरचतुर्मुखः । गत्वा ननाम तं कृष्णं प्रतुष्टाव यथागमम् ॥९०॥
साश्रुनेत्रपुलकितो भक्तिनम्रात्मकन्धरः । स्तुत्वा नत्वा जगद्धाता जगाम हरिसन्निधिम् ॥९१॥
पुनर्नत्वा प्रभुं भक्त्या जगाम राधिकान्तिकम् । मूर्ध्ना ननाम भक्त्या च मातुस्तच्चरणाम्बुजे ॥९२॥
चकार संभ्रमेणैव जटाजालेन वेष्टितम् । कमण्डलुजलेनैव शीघ्रं प्रक्षालितं मुदा ॥९३॥
यथागमं प्रतुष्टाव पुटाञ्जलियुतः पुनः ।
ब्रह्मोवाच ॥
हे मातस्त्वत्पदाम्भोजं दृष्टं कृष्णप्रसादतः ॥९४॥
सुदुर्लभं च सर्वेषां भारते च विशेषतः । षष्टिवर्षसहस्राणि तपस्तप्तं पुरा मया ॥९५॥
भास्करे पुष्करे तीर्थे कृष्णस्य परमात्मनः । आजगाम वरं दातुं वरदाता हरिः स्वयम् ॥९६॥
वरं वृणीष्वेत्युक्ते च स्वाभीष्टं च वृतं मुदा । राधिकाचरणाम्भोजं सर्वेषामपि दुर्लभम् ॥९७॥
हे गुणातीत मे शीघ्रमधुनैव प्रदर्शय । मयेत्युक्तो हरिरयमुवाच मां तपस्विनम् ॥९८॥
दर्शयिष्यामि काले च वत्सेदानीं क्षमेति च । नहीश्वराज्ञा विफला तेन दृष्टं पदाम्बुजम् ॥९९॥
सर्वेषां वाञ्छितं मातर्गोलोके भारतेऽधुना । सर्वा देव्यः प्रकृत्यंशा जन्याः प्राकृतिका ध्रुवम् ॥१००॥
त्वं कृष्णाङ्गार्धसंभूता तुल्या कृष्णेन सर्वतः । श्रीकृष्णस्त्वमयं राधा त्वं राधा वा हरिः स्वयम् ॥१०१॥
नहि वेदेषु मे दृष्ट इति केन निरूपितम् । ब्रह्माण्डाद्बहिरूर्ध्वं च गोलोकोऽस्ति यथाम्बिके ॥१०२॥
वैकुण्ठश्चाप्यजन्यश्च त्वमजन्या तथाम्बिके । यथा समस्तब्रह्माण्डे श्रीकृष्णांशांशजीविनः ॥१०३॥
तथा शक्तिस्वरूपा त्वं तेषु सर्वेषु संस्थिता । पुरुषाश्च हरेरंशास्त्वदंशा निखिलाः स्त्रियः ॥१०४॥
आत्मना देहरूपा त्वमस्याधारस्त्वमेव हि । अस्यानु प्राणैस्त्वं मातस्त्वत्प्राणैरयमीश्वरः ॥१०५॥
किमहो निर्मितः केन हेतुना श्लिपकारिणा । नित्योऽयं च तथा कृष्णस्त्वं च नित्या तथाऽम्बिके ॥१०६॥
अस्यांशा त्वं त्वदंशो वाऽप्ययं केन निरूपितः । अहं विधाता जगतां देवानां जनकः स्वयम् ॥१०७॥
तं पठित्वा गुरुमुखाद्भवन्त्येव बुधा जनाः । गुणानां वास्तवानां ते शतांशं वक्तुमक्षमः ॥१०८॥
वेदो वा पण्डितो वाऽन्यः को वा त्वां स्तोतुमीश्वरः । स्तवानां जनकं ज्ञानं बुद्धिर्ज्ञानाम्बिका सदा ॥१०९॥
त्वं बुद्धेर्जननी मातः को वा त्वां स्तोतुमीश्वरः । यद्वस्तु दृष्टं सर्वेषां तद्धि वक्तुं बुधः क्षमः ॥११०॥
यददृष्टाश्रुते वस्तु तन्निर्वक्तुं च कः क्षमः । अहं महेशोऽनन्तश्च स्तोतुं त्वां कोऽपि न क्षमः ॥१११॥
सरस्वती च वेदाश्च क्षमः कः स्तोतुमीश्वरः । यथागमं यथोक्तं च न मां निन्दितुमर्हसि ॥११२॥
ईश्वराणामीश्वरस्य योग्यायोग्ये समा कृपा । जनस्य प्रतिपाल्यस्य क्षणे दोषः क्षणे गुणः ॥११३॥
जननी जनको यो वा सर्वं क्षमति स्नेहतः । इत्युक्त्वा जगतां धाता तस्थौ च पुरतस्तयोः ॥११४॥
प्रणम्य चरणाम्भोजे सर्वेषां वन्द्यमीप्सितम् । ब्रह्मणा च कृतं स्तोत्रं त्रिसंध्यं यः पठेन्नरः ॥११५॥
राधामाधवयोः पादे भक्तिर्दास्यं लभेद्ध्रुवम् । कर्मनिर्मूलनं कृत्वा मृत्युं जित्वा सुदुर्जयम् ॥
विलङ्घ्य सर्वलोकांश्च याति गोलोकमुत्तमम् ॥११६॥
श्रीनारायण उवाच ॥
ब्रह्मणः स्तवनं श्रुत्वा तमुवाच ह राधिका ॥११७॥
वरं वृणु विधातस्त्वं यत्ते मनसि वर्तते । राधिकावचनं श्रुत्वा तामुवाच जगद्विधिः ॥११८॥
वरं च युवयोः पादपद्मभक्तिं च देहि मे । इत्युक्ते विधिना राधा तूर्णमोमित्युवाच ह ॥११९॥
पुनर्ननाम तां भक्त्या विधाता जगतां पतिः । तदा ब्रह्मा तयोर्मध्ये प्रज्वाल्य च हुताशनम् ॥१२०॥
हरिं संस्मृत्य हवनं चकार विधिना विधिः । उत्थाय शयनात्कृष्ण उवास वह्निसन्निधौ ॥१२१॥
ब्रह्मणोक्तेन विधिना चकार हवनं स्वयम् । प्र णमय्य पुनः कृष्णं राधां तां जनकः स्वयम् ॥१२२॥
कौतुकं कारयामास सप्तधा च प्रदक्षिणाम् । पुनः प्रदक्षिणां राधां कारयित्वा हुताशनम् ॥१२३॥
प्रणमय्य ततः कृष्णं वासयामास तं विधिः । तस्या हस्तं च श्रीकृष्णं ग्राहयामास तं विधिः ॥१२४॥
वेदोक्तसप्तमन्त्रांश्च पाठयामास माधवम् । संस्थाप्य राधिकाहस्तं हरेर्वक्षसि वेदवित् ॥१२५॥
श्रीकृष्णहस्तं राधायाः पृष्ठदेशे प्रजापतिः । स्थापयामास मन्त्रांस्त्रीन्पाठयामास राधिकाम् ॥१२६॥

१०२
पारिजातप्रसूनानां मालां जानुविलम्बिताम् । श्रीकृष्णस्य गले ब्रह्मा राधाद्वारा ददौ मुदा ॥१२७॥
प्रणमय्य पुनः कृष्णं राधां च कमलोद्भवः । राधागले हरिद्वारा ददौ मालां मनोहराम् ॥
पुनश्च वासयामास श्रीकृष्णं कमलोद्भवः ॥१२८॥
तद्वामपार्श्वे राधां च सस्मितां कृष्णचेतसम् । पुटाञ्जलिं कारयित्वा माधवं राधिकां विधिः ॥१२९॥
पाठयामास वेदोक्तान्पञ्च मन्त्रांश्च नारद । प्रणमय्य पुनः कृष्णं समर्प्य राधिकां विधिः ॥१३०॥
कन्यकां च यथा तातो भक्त्या तस्थौ हरेः पुरः । एतस्मिन्नन्तरे देवाः सानन्दपुलकोद्गमाः ॥१३१॥
दुन्दुभिं वादयामासुश्चानकं मुरजादिकम् । पारिजातप्रसूनानां पुष्पवृष्टिर्बभूव ह ॥१३२॥
जगुर्गन्धर्वप्रवरा ननृतुश्चाप्सरोगणाः । तुष्टाव श्रीहरिं ब्रह्मा तमुवाच ह सस्मितः ॥१३३॥
युवयोश्चरणाम्भोजे भक्तिं मे देहि दक्षिणाम् । ब्रह्मणो वचनं श्रुत्वा तमुवाच हरिः स्वयम् ॥१३४॥
मदीयचरणाम्भोजे सुदृढा भक्तिरस्तु ते । स्वस्थानं गच्छ भद्रं ते भविता नात्र संशयः ॥१३५॥
मया नियोजितं कर्म कुरु वत्स ममाज्ञया । श्रीकृष्णस्य वचः श्रुत्वा विधाता जगतां मुने ॥१३६॥
प्रणम्य राधां कृष्णं च जगाम स्वालयं मुदा । गते ब्रह्मणि सा देवी सस्मिता वक्रचक्षुषा ॥१३७॥
सा ददर्श हरेर्वक्त्रं चच्छाद व्रीडया मुखम् । पुलकाङ्कितसर्वाङ्गी कामबाणप्रपीडिता ॥१३८॥
प्रणम्य श्रीहरिं भक्त्या जगाम शयनं हरेः । चन्दनागुरुपङ्कं च कस्तूरीकुङ्कुमान्वितम् ॥१३९॥
ललाटे तिलकं कृत्वा ददौ कृष्णस्य वक्षसि । सुधापूर्णं रत्नपात्रं मधुपूर्णं मनोहरम् ॥१४०॥
प्रददौ हरये भक्त्या बुभुजे जगतीपतिः । ताम्बूलं च वरं रम्यं कर्पूरादिसुवासितम् ॥१४१॥
ददौ कृष्णाय सा राधा सादरं बुभुजे हरिः । चखाद सस्मिता राधा हरिदत्तं सुधारसम् ॥१४२॥
ताम्बूलं तेन दत्तं च बुभुजे पुरतो हरेः । कृष्णश्चर्वितताम्बूलं राधिकायै मुदा ददौ ॥१४३॥
चखाद परया भक्त्या पपौ तन्मुखपङ्कजम् । राधाचर्वितताम्बूलं ययाचे मधुसूदनः ॥१४४॥
जहास न ददौ राधा क्षमेत्युक्तं तया मुदा । चन्दनागुरुकस्तूरीकुङ्कुमद्रवमुत्तमम् ॥
राधिकायाश्च सर्वांगे प्रददौ माधवः स्वयम् ॥१४५॥
यः कामो ध्यायते नित्यं यस्यैकचरणाम्बुजम् । बभूव तस्य स वशो राधासंतोषकारणात् ॥१४६॥
यद्भृत्यभृत्यैर्मदनो जितः सर्वक्षणं मुने । स्वेच्छामयो हि भगवाञ्जितस्तेन कुतूहलात् ॥१४७॥
करे धृत्वा च तां कृष्णः स्थापयामास वक्षसि । चकार शिथिलं वस्त्रं चुम्बनं च चतुर्विधम् ॥१४८॥
बभूव रतियुद्धेन विच्छिन्ना क्षुद्रघण्टिका । चुम्बनेनौष्ठरागश्च ह्याश्लेषेण च पत्रकम् ॥१४९॥
श्रृङ्गारेणैव कबरी सिन्दूरतिलकं मुने । जगामालक्तकाङ्कश्च विपरीतादिकेन च ॥१५०॥
पुलकाङ्कितसर्वाङ्गी बभूव नवसङ्गमात् । मूर्च्छामवाप सा राधा बुबुधे न दिवानिशम् ॥१५१॥
प्रत्यङ्गेनैव प्रत्यङ्गमङ्गेनाङ्गं समाश्लिषत् । शृङ्गाराष्टविधं कृष्णश्चकार कामशास्त्रवित् ॥१५२॥
पुनस्तां च समाश्लिष्य सस्मितां वक्रलोचनाम् । क्षतविक्षतसर्वाङ्गीं नखदन्तैश्चकार ह ॥१५३॥
कङ्कणानां किङ्किणीनां मञ्जीराणां मनोहरः । बभूव शब्दस्तत्रैव शृङ्गारसमरोद्भवः ॥१५४॥
पुनस्तां च समाकृष्य शय्यायां च निवेश्य च । चकार रहितां राधां कबरीबन्धवाससा ॥१५५॥
निर्जने कौतुकात्कृष्णः कामशास्त्रविशारदः । चूडावेषांशुकैर्हीनं चकार तं च राधिका ॥१५६॥
न कस्य कस्माद्धानिश्च तौ द्वौ कार्यविशारदौ । जग्राह राधाहस्तात्तु माधवो रत्नदर्पणम् ॥१५७॥
मुरलीं माधवकराज्जग्राह राधिका बलात् । चित्तापहारं राधायाश्चकार माधवो बलात् ॥१५८॥
जहार राधिका रासान्माधवस्यापि मानसम् । निवृत्ते कामयुद्धे च सस्मिता वक्रलोचना ॥१५९॥
प्रददौ मुरलीं प्रीत्या श्रीकृष्णाय महात्मने । प्रददौ दर्पणं कृष्णः क्रीडाकमलमुज्ज्वलम् ॥१६०॥
चकार कबरीं रम्यां सिन्दूरतिलकं ददौ । विचित्रपत्रकं वेषं चकारैवंविधं हरिः ॥१६१॥
विश्वकर्मा न जानाति सखीनामपि का कथा । वेषं विधातुं कृष्णस्य यदा राधा समुद्यता ॥१६२॥
बभूव शिशुरूपं च कैशोरं च विहाय च । ददर्श बालरूपं तं रुदन्तं पीडितं क्षुधा ॥१६३॥
यादृशं प्रददौ नन्दो भीतं तादृशमच्युतम् । विनिश्वस्य च सा राधा हृदयेन विदूयता ॥१६४॥
इतस्ततस्तं पश्यन्ती शोकार्ता विरहातुरा । उवाच कृष्णमुद्दिश्य काकूक्तिमिति कातरा ॥१६५॥
मायां करोषि मायेश किंकरीं कथमीदृशीम् । इत्येवमुक्त्वा सा राधा पपात च रुरोद च ॥१६६॥
रुरोद कृष्णस्तत्रैव वाग्बभूवाशरीरिणी । कथं रोदिषि राधे त्वं स्मर कृष्णपदाम्बुजम् ॥१६७॥
आरासमण्डलं यावन्नक्तमत्रागमिष्यति । करिष्यसि रतिं नित्यं हरिणा सार्द्धमीप्सिताम् ॥१६८॥
छायां विधाय स्वगृहे स्वयमागत्य मा रुद । कृत्वा क्रोडे च प्राणेशं मायेशं बालरूपिणम् ॥१६९॥
त्यज शोकं गृहं गच्छ सुन्दरीत्थं प्रबोधिता । श्रुत्वैवं वचनं राधा कृत्वा क्रोडे च बालकम् ॥१७०॥
ददर्श पुष्पोद्यानं च वनं सद्रत्नमण्डपम् । तूर्णं वृन्दावनाद्राधा जगाम नन्दमन्दिरम् ॥१७१॥

सा मनोयायिनी देवी निमिषार्धेन नारद । संसिक्तस्निग्धमधुररसना रक्तलोचना ॥१७२॥
यशोदायै शिशुं दातुमुद्यता सत्युवाच ह । गृहीत्वैवं शिशुं स्थूलं रुदन्तं च क्षुधातुरम् ॥१७३॥
गोष्ठे त्वत्स्वामिना दत्तं प्राप्नोमि यातनां पथि । संसिक्तं वसनं वत्से मेघाच्छन्नेऽतिदुर्दिने ॥१७४॥
पिच्छिले कर्दमोद्रेके यशोदा वोढुमक्षमा । गृहाण बालकं भद्रे स्तनं दत्त्वा प्रबोधय ॥१७५॥
गृहं चिरं परित्यक्तं यामि तिष्ठ सुखं सति । इत्युक्त्वा बालकं दत्त्वा जगाम स्वगृहं प्रति ॥१७६॥
यशोदा बालकं नीत्वा चुचुम्ब च स्तनं ददौ । बहिर्निविष्टा सा राधा स्वगृहे गृहकर्मणि ॥१७७॥
नित्यं नक्तं रतिं तत्र चकार हरिणा सह । इत्येवं कथितं वत्स श्रीकृष्णचरितं शुभम् ॥
सुखदं मोक्षदं पुण्यमपरं कथयामि ते ॥१७८॥

इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवादे
राधाकृष्णविवाहनवसङ्गमप्रस्तावो नाम पञ्चदशोऽध्यायः ॥१५॥
आदितः श्लोकानां समष्टयङ्काः-११,२९१+१७८=११,४६९



## ॥ अथ षोडशोऽध्यायः ॥

श्रीनारायण उवाच ॥
माधवो बालकैः सार्द्धमेकदा हलिना सह । भुक्त्वा पीत्वा च क्रीडार्थं जगाम श्रीवनं मुने ॥१॥
तत्र नानाविधां क्रीडां चकार मधुसूदनः । कृत्वा तां शिशुभिः सार्द्धं चालयामास गोधनम् ॥२॥
ययौ मधुवनं तस्माच्छ्रीकृष्णो गोधनैः सह । तत्र स्वादु जलं पीत्वा वने च स महाबलः ॥३॥
तत्रैकदैत्यो बलवाञ्छ्वेतवर्णो भयङ्करः । विकृताकारवदनो बकाकारश्च शैलवत् ॥४॥
दृष्ट्वा च गोकुलं गोष्ठे शिशुभिर्बलकेशवौ । यथा ह्यगस्त्यो वातापिं सर्वं जग्रास लीलया ॥५॥
बकग्रस्तं हरिं दृष्ट्वा सर्वे देवा भयान्विताः । चक्रुर्हाहेति संत्रस्ता धावन्तः शस्त्रपाणयः ॥६॥
शक्रश्चिक्षेप वज्रं च मुनेरस्थिविनिर्मितम् । न ममार बकस्तस्मात्पक्षमेकं ददाह च ॥७॥
नीहारास्त्रं शशधरः शीतार्तस्तेन दानवः । यमदण्डं सूर्यपुत्रस्तेन कुण्ठो बभूव ह ॥८॥
वायव्यास्त्रं च वायुश्च तेन स्थानान्तरं ययौ । वरुणश्च शिलावृष्टिं चकार तेन पीडितः ॥९॥
हुताशनश्च वाह्नेन पक्षांश्चैव ददाह सः । कुबेरस्यार्धचन्द्रेण छिन्नपादो बभूव ह ॥१०॥
ईशानस्य च शूलेन बभूव मूर्च्छितोऽसुरः । ऋषयो मुनयश्चैव कृष्णं चक्रुर्भियाऽऽशिषम् ॥११॥
एतस्मिन्नन्तरे कृष्णः प्रज्वलन्ब्रह्मतेजसा । ददाह दैत्यसर्वाङ्गं बाह्याभ्यन्तरमीश्वरः ॥१२॥
तत्सर्वं वमनं कृत्वा प्राणांस्तत्याज दानवः । बकं निहत्य बलवाञ्छिशुभिर्गोधनैः सह ॥१३॥
ययौ केलिकदम्बानां काननं सुमनोहरम् । एतस्मिन्नन्तरे तत्र वृषरूपधरोऽसुरः ॥१४॥
नाम्ना प्रलम्बो बलवान्महाधूर्तश्च शैलवत् । शृङ्गाभ्यां च हरिं धृत्वा भ्रामयामास तत्र वै ॥१५॥
दुद्रुवुर्बालकाः सर्वे रुरुदुश्च भयातुराः । बलो जहास बलवाञ्ज्ञात्वा भ्रातरमीश्वरम् ॥१६॥
बालकान्बोधयामास भयं किमित्युवाच ह । तद्विषाणं गृहीत्वा च स्वयं श्रीमधुसूदनः ॥१७॥
भ्रामयित्वा च गगने पातयामास भूतले । प्राणांस्तत्याज दैत्येन्द्रो निपत्य च महीतलम् ॥१८॥
जहसुर्बालकाः सर्वे ननृतुश्च जगुर्मुदा । हत्वा प्रलम्बं श्रीकृष्णो बलेन सह सत्वरम् ॥१९॥
गोधनं चारयामास ययौ भाण्डीरमीश्वरः । गच्छन्तं माधवं दृष्ट्वा केशी दैत्येश्वरो बली ॥२०॥
वेष्टयामास तं शीघ्रं खुरेण विलिखन्महीम् । मूर्ध्नि कृत्वा हरिं तुष्टो गगनं शतयोजनम् ॥२१॥
उत्पात्य भ्रामयामास पपात च महीतले । जग्राह स हरिं पापी चर्वयामास कोपतः ॥२२॥
स भग्नदन्तो दैत्यश्च वज्राङ्गचर्वणादहो । श्रीकृष्णतेजसा दग्धः प्राणांस्तत्याज भूतले ॥२३॥
स्वर्गे दुन्दुभयो नेदुः पुष्पवृष्टिर्बभूव ह । एतस्मिन्नन्तरे तत्र पार्षदा दिव्यरूपिणः ॥२४॥
तत्राजग्मुः स्यन्दनस्था द्विभुजाः पीतवाससः । किरीटिनः कुण्डलिनो वनमालाविभूषिताः ॥२५॥
विनोदमुरलीहस्ताः क्वणन्मञ्जीररञ्जिताः । चन्दनोक्षितसर्वाङ्गा गोपवेषधरा वराः ॥२६॥
ईषद्धास्यप्रसन्नास्या भक्तानुग्रह कातराः । प्रदीप्तं रथमास्थाय रत्नसारविनिर्मितम् ॥२७॥
भाण्डीरवनमाजग्मुर्यत्र सन्निहितो हरिः । दिव्यवस्त्रपरीधाना रत्नालङ्कारभूषिताः ॥२८॥
प्रणमय्य हरिं स्तुत्वा जग्मुर्गोलोकमुत्तमम् । मुक्त्वा देहं परित्यज्य वैष्णवाः पुरुषास्त्रयः ॥
संप्राप्य दानवीं योनिं बभूवुः कृष्णपार्षदाः ॥२९॥

नारद उवाच ॥
के ते च दिव्यपुरुषा वैष्णवा दैत्यरूपिणः । कथयस्व महाभाग कृतं किं परमाद्भुतम् ॥३०॥

नारायण उवाच ॥

शृणु ब्रह्मन्प्रवक्ष्येऽहमितिहासं पुरातनम् ॥३१॥
श्रुतं महेश्वदनात्सूर्यपर्वणि पुष्करे । हरेर्गुणप्रसङ्गेन कथयामास शङ्करः ॥३२॥
संपृष्टो मुनिसंघैश्च मया धर्मेण ब्रह्मणा । ब्रह्मपुत्र महाभाग कथां भुवनपावनीम् ॥३३॥
कथयामास विस्तार्य सावधानं निशामय । गन्धर्वेशो गन्धवाहः पर्वते गन्धमादने ॥३४॥
महांस्तपस्विप्रवरो हरिसेवनतत्परः । पुत्रा बभूवुश्चत्वारो गन्धर्वप्रवरा मुने ॥३५॥
सस्मरुः कृष्णपादाब्जं स्वप्ने ज्ञाने दिवानिशम् । ते च दुर्वाससः शिष्याः श्रीकृष्णार्चनतत्पराः ॥३६॥
नित्यं दत्त्वा च कमलं संपूज्य तं पपुर्जलम् । वसुदेवः सुहोत्रश्च सुदर्शनसुपार्श्वकौ ॥३७॥
चत्वारो वैष्णवश्रेष्ठास्तेपुस्ते पुष्करे तपः । चिरकालं तपस्तप्त्वा बभूवुः सिद्धमन्त्रिणः ॥३८॥
ज्येष्ठो दुर्वाससो योगं संप्राप्य योगिनां वरः । सिद्धश्चाकृतदारश्च प्रज्वलन्ब्रह्मतेजसा ॥३९॥
सद्यो देहं परित्यज्य बभूव कृष्णपार्षदः । एकदा भ्रातरस्ते च जग्मुश्चित्रसरोवरम् ॥४०॥
पद्मानि कृष्णपूजार्थमाहर्तुमुदये रवेः । पद्मानां चयनं कृत्वा गच्छतो वैष्णवान्मुने ॥४१॥
दृष्ट्वा निबध्य संजग्मुः सर्वे शङ्करकिङ्कराः । बलिष्ठा दुर्बलान्धृत्वा जग्मुः शङ्करसन्निधिम् ॥४२॥
ते सर्वे शङ्करं दृष्ट्वा प्रणेमुः शिरसा भुवि । तानुवाच शिवः शीघ्रं प्रयुज्याशिषमुत्तमाम् ॥
ईषद्धास्यप्रसन्नास्यो भक्तानुग्रहकातरः ॥४३॥
शिव उवाच ॥
के यूयं पद्महर्तारः पार्वत्याश्च सरोवरे ॥४४॥
लक्षयक्षै रक्षणीयं पार्वतीव्रतहेतवे । नित्यं सहस्रकमलं ददाति हरये सती ॥४५॥
व्रते त्रैमासिके भक्त्या पतिसौभाग्यवर्द्धने । शिवस्य वचनं श्रुत्वा तमूचुर्वैष्णवा भिया ॥
पुटाञ्जलियुताः सर्वे भक्तिनम्रात्मकन्धराः ॥४६॥
गन्धर्वा ऊचुः ॥
वयं गन्धर्वप्रवरा गन्धवाहसुता विभो ॥४७॥
हरये कमलं दत्त्वा पिबामो जलमीश्वर । वयं न विद्मो हे नाथ पार्वत्या रक्षितं सरः ॥४८॥
गृहाण कमलं सर्वं युष्माकं च फलं कुरु । न दास्यामोऽद्य कमलं पास्यामोऽद्य जलं हर ॥४९॥
किं वा कथं न पास्यामस्तुभ्यं दत्तानि तानि च । नित्यं ध्यात्वा यत्पदाब्जं पद्मेन पूजयामहे ॥५०॥
साक्षात्तस्मै प्रदत्त्वा च पद्मं पूता वयं प्रभो । एकं ब्रह्म ह्यद्वितीयं क्व देहः क्व च रूपवान् ॥५१॥
भक्तानुग्रहतो देहो रूपभेदश्च मायया । किं तु गृहाण पद्मानि त्वमेव मत्प्रभुः प्रभो ॥५२॥
यतो नो मानसं पूर्णं तद्रूपं दर्शयाच्युत । द्विभुजं कमनीयं च किशोरं श्यामसुन्दरम् ॥५३॥
विनोदमुरलीहस्तं पीताम्बरधरं परम् । एकवक्त्रं द्विनयनं चन्दनागुरुचर्चितम् ॥५४॥
ईषद्धास्यप्रसन्नास्यं रत्नालङ्कारभूषितम् । कौस्तुभेन मणीन्द्रेण वक्षःस्थलसमुज्ज्वलम् ॥५५॥
मयूरपिच्छचूडं च मालतीमाल्यभूषितम् । पारिजातप्रसूनानां मालाराजिविभूषितम् ॥५६॥
कोटिकन्दर्पलावण्यलीलाधाममनोहरम् । गोपीसङ्घैर्दृश्यमानं सस्मितैर्वक्रलोचनैः ॥९७॥
नवयौवनसम्पन्नं राधावक्षस्थलस्थितम् । ब्रह्मादिभिः स्तूयमानं वन्द्यं ध्येयमभीप्सितम् ॥५८॥
स्वात्मारामं पूर्णकामं भक्तानुग्रहकातरम् । इत्युक्त्वा पुरतः शम्भोस्तस्थुर्गन्धर्वपुङ्गवाः ॥५९॥
श्रीकृष्णरूपश्रवणात्पुलकाङ्कितविग्रहः । गन्धर्वाणां वचः श्रुत्वा शिवस्तानित्युवाच ह ॥६०॥
श्रीकृष्णरूपश्रवणात्साश्रुपूर्णविलोचनः । मयैव यूयं विज्ञाता वैष्णवप्रवरा महीम् ॥६१॥
पूतां कर्तुं च भ्रमथ चरणाम्भोजरेणुना । अहं वाञ्छां करोम्येव श्रीकृष्णभक्तदर्शने ॥६२॥
समागमो हि साधूनां त्रिषु लोकेषु दुर्लभः । पार्वत्याश्च सुराणां च सदा यूयं मम प्रियाः ॥६३॥
आत्मनश्चात्मभक्तेभ्यो वैष्णवाश्च प्रियाश्च नः । किन्तु मोघं च न भवेन्मया यत्स्वीकृतं पुरा ॥६४॥
तच्छ्रूयतां महाभागाः पार्वतीव्रतकर्मणि । सरसश्चैव पद्मानि यैर्हृतानि व्रतान्तरे ॥६५॥
ते तूर्णमासुरीं योनिं गमिष्यन्ति न संशयः । न हि श्रीकृष्णभक्तानामशुभं विद्यते क्वचित् ॥६६॥
संप्राप्य मानवीं योनिं गोलोकं यास्यथ ध्रुवम् । यूयं श्रीकृष्णरूपं च प्रत्यक्षं द्रष्टुमुत्सुकाः ॥६७॥
ध्रुवं द्रक्ष्यथ भो वत्सा वृन्दारण्ये च भारते । दृष्ट्वा कृष्णं ततो मृत्युं संप्राप्य वैष्णवोत्तमाः ॥६८॥
दिव्यं स्यन्दनमारुह्य गमिष्यथ हरेर्गृहम् । अधुना वाञ्छनीयं च रूपं द्रष्टुमिहोत्सुकाः ॥६९॥
तत्सर्वं पश्यतेत्युक्त्वा दर्शयामास तच्छिवः । रूपं दृष्ट्वा साश्रुनेत्राः प्रणम्य सर्वरूपिणम् ॥७०॥
आजग्मुर्दानवीं योनिमिति ते दानवेश्वराः । वसुदेवः पुरा मुक्तः सुहोत्रश्च बकासुरः ॥७१॥
सुदर्शनः प्रलम्बोऽयं स्वयं केशी सुपार्श्वकः । हरस्य वरदानेन दृष्ट्वा रूपमनुत्तमम् ॥७२॥
मृत्युं संप्राप्य श्रीकृष्णाज्जग्मुस्ते कृष्णमन्दिरम् । इत्येवं कथितं विप्र हरेश्चरितमद्भुतम् ॥
बककेशिप्रलम्बानां मोक्षणं मोक्षकारकम् ॥७३॥

नारद उवाच ॥
श्रुतं सर्वं महाभाग त्वत्प्रसादाद्यदद्भुतम् ॥७४॥
अधुना श्रोतुमिच्छामि पार्वत्या किं कृतं व्रतम् । को वाऽऽराध्यो व्रतस्यास्य किं फलं नियमश्च कः ॥७५॥
कानि द्रव्याणि भगवन्व्रतोपयोगिकानि च । कतिकालं व्रतं किं वा प्रतिष्ठायां निरूपणम् ॥७६॥
सुविचार्य वद विभो श्रोतुं कौतूहलं मम ।
श्रीनारायण उवाच ॥
व्रतं त्रैमासिकं नाम पतिसौभाग्यवर्धनम् ॥७७॥
आराध्यो भगवान्कृष्णो राधिकासहितो मुने । विषुवे च समारंभः समाप्तिर्दक्षिणायने ॥७८॥
संयम्य पूर्वदिवसे कृत्वाऽवश्यं हविष्यकम् । स्नात्वा वैशाखसङ्क्रान्त्यां संकल्प्य जाह्नवीतटे ॥७९॥
घटे मणौ शालग्रामे जले वा पूजयेद्व्रती । ध्यायेद्भक्त्या च राधेशं संपूज्य पञ्च देवताः ॥८०॥
ध्यानं च सामवेदोक्तं निबोध कथयामि ते । नवीननीरदश्यामं पीतकौशेय वाससम् ॥८१॥
शरत्पार्वणचन्द्रास्यमीषद्धास्यसमन्वितम् । शरत्प्रफुल्लपद्माक्षं मञ्जुलाञ्छनरञ्जितम् ॥८२॥
मानसं गोपिकानां च मोहयन्तं मुहुर्मुहुः । राधया दृश्यमानं च राधावक्षःस्थलस्थितम् ॥८३॥
ब्रह्मानन्तेशधर्माद्यैः स्तूयमानमहं भजे । ध्यात्वा कृष्णं च ध्यानेन तमावाह्य व्रती मुदा ॥८४॥
ध्यायेत्तदा राधिकां च ध्यानं मध्यन्दिनेरितम् । राधां रासेश्वरीं रम्यां रासोल्लासरसोत्सुकाम् ॥८५॥
रासमण्डलमध्यस्थां रासाधिष्ठातृदेवताम् । रासेश्वरोरःस्थलस्थां रसिकां रसिकप्रियाम् ॥८६॥
रसिकप्रवरां रम्यां रमां च रमणोत्सुकाम् । शरद्राजीवराजीनां प्रभामोचनलोचनाम् ॥८७॥
वक्रभ्रूभङ्गसंयुक्तां मञ्जीरेणैव रञ्जिताम् । शरत्पार्वणचन्द्रास्यामीषद्धास्यमनोहराम् ॥८८॥
चारुचम्पकवर्णाभां चन्दनेन विभूषिताम् । कस्तूरीबिन्दुना सार्धं सिंदूरबिंदुना युताम् ॥८९॥
चारुपत्रावलीयुक्तां वह्निशुद्धांशुकोज्ज्वलाम् । सद्रत्नकुण्डलाभ्यां च सुकपोलस्थलोज्ज्वलाम् ॥९०॥
रत्नेन्द्रसारहारेण वक्षःस्थलविराजिताम् । रत्नकङ्कणकेयूरकिङ्किणीरत्नरञ्जिताम् ॥९१॥
सद्रत्नसाररचितक्वणन्मञ्जीररञ्जिताम् । ब्रह्मादिभिश्च सेव्येन श्रीकृष्णेनैव सेविताम् ॥९२॥
सर्वेशेन स्तूयमानां सर्वबीजां भजाम्यहम् । इति ध्यात्वा च कृष्णेन सहितां तां च पूजयेत् ॥९३॥
भक्त्या दत्त्वा प्रतिदिनमुपचारांश्च षोडश । प्रत्येकं च पृथक्कृत्वा सर्वं दद्याद्व्रती मुदा ॥९४॥
सहस्रकमलं दिव्यं शतमष्टोत्तरं मुने । होमं कुर्याद्व्रती नित्यमष्टोत्तरशताहुतीः ॥९५॥
दद्याद्भक्त्या च कृष्णाय स्वाहेत्युच्चार्य यत्नतः । रसालस्य कदल्याश्च ह्यामं वा पक्वमेव च ॥९६॥
नित्यमष्टोत्तरशतं दद्याद्भक्त्याऽक्षतैः फलम् । नित्यं च भोजयेद्भक्त्या ब्राह्मणानां शतं मुने ॥९७॥
होमं कुर्याद्व्रती नित्यमष्टोत्तरशताहुतीः । दद्याद्भक्त्या च कृष्णाय राधिकासहिताय च ॥९८॥
तिलेन हवनं कुर्यादाज्यमिश्रेण नारद । वाद्यं च वादयेन्नित्यं कारयेद्धरिकीर्तनम् ॥९९॥
एवं मासत्रयं कृत्वा प्रतिष्ठां तदनन्तरम् । प्रतिष्ठादिवसे तत्र विधानं शृणु नारद ॥१००॥
कमलानां च नवतिसहस्राण्यक्षतानि च । ब्राह्मणानां सहस्राणि नव विप्रेन्द्र यत्नतः ॥१०१॥
भोजयेत्परमान्नानि स्वादूनि मिष्टकानि च । फलं विंशाधिकं सप्तशतं नवसहस्रकम् ॥१०२॥
दद्यान्नानाविधं द्रव्यं नैवेद्यं सुमनोहरम् । संस्कृताग्निं च संस्थाप्य होमं कुर्याद्विचक्षणः ॥१०३॥
नवतिं च सहस्राणि हुत्वाऽऽज्येन तिलेन च । सवस्त्रं च सभोज्यं च यज्ञसूत्रफलान्वितम् ॥१०४॥
गन्धपुष्पार्चितान्भक्त्या दद्यान्नवतिलड्डुकान् । दद्यान्नवतिकुम्भांश्च शीततोयप्रपूरितान् ॥१०५॥
एवंविधं व्रतं कृत्वा दद्याद्विप्राय दक्षिणाम् । दक्षिणायाः परिमितं वेदेषु यन्निरूपितम् ॥१०६॥
वृषेन्द्राणां सहस्रं च स्वर्णशृङ्गसमन्वितम् । इत्येवं कथितं विप्र कृतं त्रैमासिकव्रतम् ॥१०७॥
विशिष्टसन्ततिकरं पतिसौभाग्यवर्द्धनम् । व्रतस्यास्य प्रभावेण सौभाग्यं शतजन्मनि ॥१०८॥
सत्पुत्रजननी सा च भवेज्जन्मशतं ध्रुवम् । कदाऽपि न भवेत्तस्या भेदश्च पतिपुत्रयोः ॥१०९॥
दासतुल्यो भवेत्पुत्रो भर्ता च स्ववचस्करः । अनुक्षणं भवेद्राधाकृष्णभक्तियुता सती ॥११०॥
भवेद्व्रतप्रभावेण प्राप्तज्ञानहरिस्स्मृतिः। व्रतं च सामवेदोक्तं कृतं पूर्वमथावयोः ॥१११॥
सर्वेषां च व्रतानां च श्रेष्ठं शृणु वदामि ते । स्वायंभुवस्य च मनोः शतरूपाभिधा सती ॥११२॥
तया कृतं प्रथमतः कृत्वाऽगस्त्यं पुरोहितम् । तदा कृतं देवहूत्या चाकूत्या च कृतं तदा ॥११३॥
पुरोहितं पुलस्त्यं च कृत्वा श्रुत्युक्तया मुने । चकार रोहिणी तत्तु क्रतुं कृत्वा पुरोहितम् ॥११४॥
रतिश्चकार तद्भक्त्या गौतमस्तत्पुरोहितः । अकारि तद्व्रतं भक्त्या तारया गुरुकान्तया ॥११५॥
महासंभृतसंभारा वसिष्ठस्तत्पुरोहितः । तद्दृष्ट्वा गुरुपत्न्याश्च शक्रशच्या कृतं व्रतम् ॥११६॥
महासम्भृतसम्भारस्तत्पुरोधा बृहस्पतिः । व्रतं चकार स्वाहा च सर्वतोऽपि विलक्षणम् ॥११७॥
अतिसंभृतसंभारो मरीचिस्तत्पुरोहितः । तद्दृष्ट्वा पार्वती ब्रह्मन्नुवाच शङ्करं मुदा ॥

पुटाञ्जलियुता देवी भक्तिनम्रात्मकन्धरा ॥११८॥
पार्वत्युवाच ॥
आज्ञां कुरु जगन्नाथ करोमि व्रतमुत्तमम् ॥११९॥
आवयोरिष्टदेवस्य व्रतानां च परं व्रतम् । हरेराराधनं नाथ सर्वमङ्गलकारणम् ॥१२०॥
इष्टं दत्तं श्रुतेः पाठं तीर्थं पृथ्व्याः प्रदक्षिणम् । हरेराराधनस्यापि कलां नार्हति षोडशीम् ॥१२१॥
बहिरभ्यन्तरे यस्य हरिस्मृतिरनुक्षणम् । जीवन्मुक्तस्य तस्यैव मुक्तिर्भवति दर्शनात् ॥१२२॥
तस्य पादाब्जरजसा सद्यः पूता वसुन्धरा । तस्य दर्शनमात्रेण पुनाति भुवनत्रयम् ॥१२३॥
ब्रह्मा विष्णुश्च धर्मश्च शेषस्त्वं च गणेश्वरः । ध्यायंध्यायं यत्पदाब्जं तेजसा तत्समो महान् ॥१२४॥
यश्च यं सन्ततं ध्यायेत्स तमाप्नोति निश्चितम् । गुणेन तेजसा बुद्ध्या ज्ञानेन तत्समो भवेत् ॥१२५॥
कृष्णस्य स्मरणाद्ध्यानात्तपसा तस्य सेवया । मया प्राप्तो हि भगवान्स्वामी वा पुत्र एव च ॥१२६॥
प्रलब्धं लीलया सर्वं पूर्णं मन्मानसं तदा । स्वामी मे त्वादृशः पुत्रौ कार्तिकेयगणेश्वरौ ॥१२७॥
पिता हिमाद्रिः कृष्णांशो मम किं दुर्लभं प्रभो । पार्वतीवचनं श्रुत्वा सुप्रीतः शङ्करः स्वयम् ॥
प्रहस्योवाच मधुरं पुलकाङ्कितविग्रहः ॥१२८॥
श्रीमहादेव उवाच ॥
महालक्ष्मीस्वरूपासि किमसाध्यं तवेश्वरि ॥१२९॥
सर्वसम्पत्स्वरूपा त्वमअन्तशक्ति रूपिणी । त्वं च यस्य गृहे देवि स चैश्वर्यस्य भाजनम् ॥१३०॥
न लक्ष्मीर्यद्गृहे तस्य जीवनान्मरणं वरम् । अहं ब्रह्मा च विष्णुश्च त्वयि भक्त्या शुभप्रदे ॥१३१॥
संहारे सृष्टिकाले च त्वत्प्रसादाद्वयं क्षमाः । को वा हिमालयः कोऽहं कौ कार्त्तिकगणेश्वरौ ॥१३२॥
त्वद्विहीना अशक्ताश्च त्वया च वयमीश्वराः । युक्ताः पतिव्रतायाश्च याः पुराज्ञाः श्रुतौ श्रुताः ॥१३३॥
गृहीत्वाऽऽज्ञामीश्वरस्य व्रतं कुरु पतिव्रते । व्रतमेतत्कृतं याभिस्ताभ्यः कुरु विलक्षणम् ॥१३४॥
सनत्कुमारो भगवान्व्रते तेऽस्तु पुरोहितः । कमलानां ब्राह्मणानां द्रव्याणां दायकोऽप्यहम् ॥१३५॥
कुबेरं द्रव्यकोशे च रक्षकं कुरु सुन्दरि । व्रते च दानाध्यक्षोऽहं धनदात्री च श्रीः स्वयम् ॥१३६॥
पाठको वह्निदेवश्च वरुणो जलदायकः । वस्तूनां वाहका यक्षास्तदध्यक्षः षडाननः ॥१३७॥
स्थानसंस्कार कर्ता च व्रतेऽत्र पवनः स्वयम् । परिवेष्टा स्वयं शक्रश्चन्द्रोऽधिष्ठापको व्रते ॥१३८॥
सूर्यश्च दाननिर्वक्ता योग्यायोग्यं यथोचितम् । व्रतोपयुक्तं यद्द्रव्यं दत्त्वा नियमितं प्रिये ॥१३९॥
ततोऽधिकं फलं पुष्पं हरये देहि सुन्दरि । व्रते नियमितान्विप्रान्भोजयित्वा ततोऽधिकान् ॥१४०॥
असंख्यान्ब्राह्मणान्देवि भक्त्या कुरु निमन्त्रणम् । समाप्तिदिवसे स्वर्णं रत्नं मुक्तां प्रवालकम् ॥१४१॥
व्रतोक्तां दक्षिणां दत्त्वा सर्वं देहि द्विजातये । इत्युक्त्वा शङ्करस्तां च कारयामास तद्व्रतम् ॥१४२॥
व्रतं चकार सा दुर्गा सर्वाभ्यश्च विलक्षणम् । इत्येवं कथितं विप्र पार्वत्या यद्व्रतं कृतम् ॥१४३॥
रत्नं वोढुमशक्ताश्च ब्राह्मणाः पार्वतीव्रते । इतिहासः श्रुतः सर्वः प्रकृतं शृणु नारद ॥१४४॥
श्रीकृष्णबालचरितं नूत्नं नूत्नं पदे पदे । हत्वा तान्दानवेन्द्रांश्च शिशुभिः सह गोकुले ॥१४५॥
जगाम स्वगृहं कृष्णः कुबेरभवनोपमम् । सर्वेभ्यो वनवार्ता च प्रोक्ता च शिशुभिर्मुदा ॥१४६॥
श्रुत्वैवं विस्मिताः सर्वे नन्दो भयमवाप ह । आनीय वृद्धान्गोपांश्च गोपिकाः स्थविरास्तथा ॥१४७॥
युक्तिं चकार तैः सार्द्धमालोच्य समयोचिताम् । कृत्वा युक्तिं च गोपेशस्तत्स्थानं त्यक्तुमुद्यतः ॥१४८॥
गन्तुं वृन्दावनं सर्वानुवाच तत्क्षणं मुने । नन्दाज्ञां च समाकर्ण्य ते सर्वे गन्तुमुद्यताः ॥१४९॥
गोपाश्च गोपिकाश्चैव बालका बालिकास्तथा । कृष्णेन हलिना सार्धं प्रययुर्बालका मुदा ॥१५०॥
सङ्गीतं च प्रगायन्तो नानावेष समन्विताः । वेणुप्रवादकाः केचित्केचिच्छृङ्गप्रवादकाः ॥१५१॥
करतालकराः केचिद्वीणाहस्ताश्च केचन । शरयन्त्रकराः केचिच्छृङ्गहस्ताश्च केचन ॥१५२॥
नवपल्लवकर्णाश्च केचिद्गोपालबालकाः । केचिन्मुकुलकर्णाश्च पुष्पकर्णाश्च केचन ॥१५३॥
नवमाल्यकराः केचित्केचिदाजानुमालिनः । केचित्पल्लवचूडाश्च पुष्पचूडाश्च केचन ॥१५४॥
गोपालबालकाः सर्वे विप्रेन्द्र नवकोटयः । जग्मुर्गोप्यो वयस्याश्च कोटिशः कोटिशो मुदा ॥१५५॥
वृद्धाश्च कोटिशस्तत्र बृहच्छ्रोण्यश्चलत्कुचाः । राधिकासहचारिण्यो बाला गोपालिका मुने ॥१५६॥
ताः सुशीलादयो भव्या नानालङ्कारभूषिताः । दिव्यवस्त्रपरीधानाः सस्मितास्ता ययुर्मुदा ॥१५७॥
काश्चिदारुह्य शिबिकां रथमारुह्य काश्चन । राधा स्यन्दनमारुह्य शातकौम्भपरिच्छदम् ॥१५८॥
ताभिर्युक्ता ययौ देवी रत्नालङ्कार भूषिता । यशोदा रोहिणी चैव रत्नालङ्कारभूषिता ॥१५९॥
ययौ स्यन्दनमारुह्य शातकौम्भपरिच्छदम् । नन्दः सुनन्दः श्रीदामा गिरिभानुर्विभाकरः ॥१६०॥
वीरभानुश्चन्द्रभानुर्गजस्थाः प्रययुर्मुदा । श्रीकृष्णबलदेवौ तौ रत्नालङ्कारभूषितौ ॥१६१॥
स्वर्णं स्यन्दनमास्थाय जग्मतुः परया मुदा । कोटिशः कोटिशो गोपा वृद्धाश्च यौवनान्विताः ॥१६२॥

अश्वस्थाश्च गजस्थाश्च रथस्थाश्चैव केचन । गोपा ययुर्मुदा युक्ताश्चोद्धता नन्दकिङ्कराः ॥१६३॥
वृषस्था गर्दभस्थाश्च संगीततानतत्पराः । अपरा राधिकादास्यस्त्रिसप्तशतकोटयः ॥१६४॥
मुदान्विताः सस्मिताश्च स्वर्णालङ्कारभूषिताः । काश्चित्सिन्दूरहस्ताश्च काश्चित्कज्जलवाहिकाः ॥१६५॥
काश्चित्कन्दुकहस्ताश्च काश्चित्पुत्तलिकाकराः । भोगद्रव्यकराः काश्चित्क्रीडाद्रव्यकरा वराः ॥१६६॥
वेषद्रव्यकराः काश्चित्काश्चिन्मालाकरा वराः । काश्चिद्वाद्यकहस्ताश्च प्रययुर्गोपिका मुदा ॥१६७॥
वह्निशुद्धांशुकानां च वाहिकाश्चैव काश्चन । चन्दनागुरुकस्तूरीकुङ्कुमद्रववाहिकाः ॥१६८॥
काश्चित्सङ्गीतनिरताः काश्चिच्चित्रकथारताः । कोटिशः कोटिशो रम्याः प्रययुः शिबिकान्विताः ॥१६९॥
कोटिशः कोटिशश्चाश्वाः कोटिशः कोटिशो रथाः । कोटिशः कोटिशश्चैव शकटा द्रव्यपूरिताः ॥१७०॥
कोटिशः कोटिशश्चैव वृषेन्द्रा द्रव्यवाहकाः । कोटिशः कोटिशश्चैव दशलक्षाणि हस्तिनाम् ॥१७१॥
हस्तिपाङ्कुशयुक्तानि ययुर्वृन्दावनं वनम् । सर्वे वृन्दावनं गत्वा दृष्ट्वा शून्यगृहं मुने ॥१७२॥
वृक्षमूले यथास्थानं तस्थुः सर्वे यथोचितम् । उवाच गोपाञ्छ्रीकृष्णो गृहाञ्श्रेष्टतमान्व्रजाः ॥१७३॥
अद्य सन्तिष्ठतेत्येवं श्रुत्वा श्रीकृष्णभाषितम् । कुत्र सन्ति गृहाः कृष्णेत्येवमूचुस्तु गोपकाः ॥१७४॥
इति तेषां वचः श्रुत्वा श्रीकृष्णो वाक्यमब्रवीत् ॥१७५॥

श्रीकृष्ण उवाच ॥

अत्र स्थाने गृहाः सन्ति प्रसन्ना देवनिर्मिताः ॥१७६॥
देवप्रीतिं विना शक्ता नहि द्रष्टुं च केचन । अद्य तिष्ठत गोपालाः संपूज्य वनदेवताः ॥१७७॥
प्रातर्यूयं गृहान्रम्यान्द्रक्ष्यथाद्य ध्रुवं मुदा । धूपदीपादिनैवेद्यैर्बलिभिः पुष्पचन्दनैः ॥१७८॥
देवीं च वटमूलस्थां पूजां कुरुत चण्डिकाम् । कृष्णस्य वचनं श्रुत्वा गोपाः संपूज्य देवताम् ॥
भुक्त्वा भोगान्दिने रात्रौ तत्रैव सुषुपुर्मुदा ॥१७९॥

इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवादे
बकप्रलम्बकेशिवधपूर्वकवृन्दावनगमनं नाम षोडशोऽध्यायः ॥१६॥
आदितः श्लोकानां समष्ट्यङ्काः-११,४६९+१७८=११,६४८



## ॥ अथ सप्तदशोऽध्यायः ॥

श्रीनारायण उवाच ॥

सुप्तेषु व्रजनन्देषु नक्तं वृन्दावने वने । सुनिद्रिते च निद्रेशे मातृवक्षःस्थलस्थिते ॥१॥
निद्रितासु च गोपीषु रम्यतल्पस्थितासु च । यूनां च सुखसंयोगानुषक्तमानसासु च ॥२॥
कासुचिच्छिशुयुक्तासु सखीयुक्तासु कासुचित् । कासुचिच्छकटस्थासु स्यन्दनस्थासु कासुचित् ॥३॥
पूर्णेन्दुकौमुदीयुक्ते स्वर्गादपि मनोहरे । नानाप्रकारकुसुमवायुना सुरभीकृते ॥४॥
सर्वप्राणिनि निश्चेष्टे मुहूर्ते पञ्चमे गते । तत्राजगाम भगवाञ्छिल्पिनां च गुरोर्गुरुः ॥५॥
बिभ्रद्दिव्यांशुकं सूक्ष्मं रत्नमाल्यं मनोहरम् । रत्नालङ्कारमतुलं श्रीमन्मकरकुण्डलम् ॥६॥
ज्ञानेन वयसा वृद्धो दर्शनीयः किशोरवत् । अतीव सुन्दरः श्रीमान्कामदेवसमप्रभः ॥७॥
विशिष्टशिल्पनिपुणैः सार्द्धं शिल्पित्रिकोटिभिः । मणिरत्नैर्हेमरत्नैर्लोहास्त्रयुतहस्तकैः ॥८॥
आजग्मुर्यक्षनिकराः कुबेरवनकिङ्कराः । स्फाटिकारत्नवेषाश्च दीर्घस्कन्धाश्च केचन ॥९॥
पद्मरागकरा केचिदिन्द्रनीलकरा वराः । केचित्स्यमन्तककराश्चन्द्रकान्तकरास्तथा ॥१०॥
सूर्यकान्तकराश्चान्ये प्रभाकरकरा वराः । केचित्परशुहस्ताश्च लोहसारकरा वराः ॥११॥
केचिच्च गन्धसाराणां मणीन्द्राणां च वाहकाः । केचिच्चामरहस्ताश्च केचिद्दर्पणवाहकाः ॥१२॥
स्वर्णपात्रघटादीनां वाहकाश्चैव केचन । विश्वकर्मा च सामग्रीं दृष्ट्वा तु सुमनोहराम् ॥१३॥
नगरं कर्तुमारेभे ध्यात्वा कृष्णं शुभेक्षणम् । पञ्चयोजनविस्तीर्णं भारते श्रेष्ठमुत्तमम् ॥१४॥
पुण्यक्षेत्रं तीर्थसारमतिप्रियतमं हरेः । तत्रस्थानां मुमुक्षूणां परं निर्वाणकारणम् ॥१५॥
गोलोकस्य च सोपानं सर्वेषां वाञ्छितप्रदम् । चतुष्कोटिचतुःशालं तत्रैवातिमनोहरम् ॥१६॥
कपाटस्तम्भसोपानसहितैः प्रस्तरैर्वरैः । चित्रपुत्तलिकापुष्पकलशोज्वलशेखरम् ॥१७॥
शैलजाश्मविनिर्माणवेदिप्राङ्गणसंयुतम् । शिलाप्राकारसंयुक्तं प्रचकाराथ लीलया ॥१८॥
यथोचितबृहत्क्षुद्रद्वारद्वयसमन्वितम् । स्फाटिकाकारमणिभिर्मुदा युक्तो विनिर्ममे ॥१९॥
सोपानैर्गन्धसाराणां स्तम्भैः शङ्खविनिर्मितैः । कपाटैर्लोहसाराणां राजतैः कलशोज्वलैः ॥२०॥
वज्रसारविनिर्माणप्राकारैः परिशोभितम् । कृत्वाऽऽश्रमं बल्लवानां यथास्थानं यथोचितम् ॥
वृषभान्वालयं रम्यं कर्तुमारब्धवान्पुनः ॥२१॥

प्राकारपरिखायुक्तं चतुर्द्वारान्वितं परम् । चारुविंशच्चतुःशालं महामणिविनिर्मितम् ॥२२॥
रत्नसारविकारैश्च तूलिकानिकरैर्वरैः । सुवर्णाकारमणिभिरारोहैरतिसुन्दरैः ॥२३॥
लोहसारकपाटैश्च शोभितं चित्रकृत्रिमैः । मन्दिरेमन्दिरे रम्ये सुवर्णकलशोज्ज्वलम् ॥२४॥
तदाश्रमैकदेशे च निर्जनेऽतिमनोहरे । चारुचम्पकवृक्षाणामुद्यानाभ्यन्तरे मुने ॥२५॥
संभोगार्थं कलावत्याः स्वामिना सह कौतुकात् । विशिष्टेन मणीन्द्रेण चकाराट्टालिकालयम् ॥२६॥
युक्तं नवभिरारोहैरिन्द्रनीलविनिर्मितैः । स्थूणाकपाटनिकरैर्गन्धसारविकारजैः ॥
अत्युच्छ्रितं मनोरम्यं सर्वतोऽपि विलक्षणम् ॥२७॥
नारद उवाच ॥
कलावती का भगवन्कस्य पत्नी मनोहरा । यत्नतो यद्गृहं रम्यं निर्ममे सुरकारुणा ॥२८॥
नारायण उवाच ॥
पितृणां मानसी कन्या कमलांशा कलावती । सुन्दरी वृषभानस्य पतिव्रतपरायणा ॥
यस्याश्च तनया राधा कृष्णप्राणाधिका प्रिया ॥२९॥
श्रीकृष्णार्द्धांशसंभूता तेन तुल्या च तेजसा । यस्याश्च चरणाम्भोजरजःपूता वसुन्धरा ॥
यस्यां च सुदृढां भक्तिं सन्तो वाञ्छन्ति सन्ततम् ॥३०॥
नारद उवाच ॥
पितृणां मानसीं कन्यां व्रजे तिष्ठन्कथं मुने । मानवः केन पुण्येन कथमाप सुदुर्लभाम् ॥३१॥
वृषभानुर्व्रजपतिः पुराऽऽसीत्को महानहो । कस्य वा केन तपसा राधा कन्या बभूव ह ॥३२॥
सूत उवाच ॥
नारदस्य वचः श्रुत्वा महर्षिर्ज्ञानिनां वरः । प्रहस्योवाच प्रीत्या तमितिहासं पुरातनम् ॥३३॥
नारायण उवाच ॥
बभूवुः कन्यकास्तिस्रः पितृणां मानसात्पुरा ॥३४॥
कलावतीरत्नमालामेनकाश्चातिदुर्लभाः । रत्नमाला च जनकं वरयामास कामुकी ॥३५॥
शैलाधिपं हरेरंशं मेनका सा हिमालयम् । दुहिता रत्नमालाया अयोनिसंभवा सती ॥३६॥
श्रीरामपत्नी श्रीः साक्षात्सीता सत्यपरायणा । कन्यका मेनकायाश्च पार्वती सा पुरा सती ॥३७॥
अयोनिसंभवा सा च हरेर्माया सनातनी । सा लेभे तपसा देवं हरं नारायणात्मकम् ॥३८॥
कलावती सुचन्द्रं च मनुवंशसमुद्भवम् । स च राजा हरेरंशस्तां संप्राप्य कलावतीम् ॥३९॥
मन्ये गुणवतां श्रेष्ठमात्मानमतिसुन्दरम् । अहो रूपमहो वेषमहो अस्या नवं वयः ॥४०॥
सुकोमलाङ्गं ललितं शरच्चन्द्राधिकाननम् । गमनं दुर्लभमहो गजखञ्जनगञ्जनम् ॥४१॥
कटाक्षैर्मोहितुं शक्ता मुनीन्द्राणां च मानसम् । श्रोणीयुग्मं सुललितं रम्भास्तंभविनिर्मितम् ॥४२॥
स्तनद्वयं सुकठिनमतिपीनोन्नतं मुने । नितम्बयुगलं चारु रथचक्रविनिर्मितम् ॥४३॥
हस्तौ पादौ च रक्तौ च पक्वबिम्बफलाधरम् । पक्वदाडिमबीजाभं दन्तपङ्क्तिमनोहरम् ॥४४॥
शरन्मध्याह्नपद्मानां प्रभामोचनलोचनम् । भूषणैर्भूषितं रूपं कृतं सद्रत्नभूषणम् ॥४५॥
इतीव मत्वा दृष्ट्वा च कामबाणप्रपीडितः । दिव्यं स्यन्दनमारुह्य कामुक्या सह कामुकः ॥४६॥
क्रीडां चकार रहसि स्थानेस्थाने मनोहरे । रम्यायां मलयद्रोण्यां चन्दनागुरुवायुना ॥४७॥
चारुचम्पकपुष्पाणां तल्पे रतिसुखावहे । मालतीमल्लिकानां च पुष्पोद्यानेऽतिपुष्पिते ॥४८॥
पुष्पभद्रानदीतीरे निर्जने केतकीवने । पश्चिमाब्धितटान्तस्थकानने जन्तुवर्जिते ॥४९॥
नन्दने मन्दरद्रोण्यां कावेरीतीरजे वने । शैलेशैले सुरम्ये च नद्यांनद्यां नदेनदे ॥५०॥
द्वीपेद्वीपे तु रहसि स रेमे वामया सह । नवसङ्गमसंयोगाद्बुबुधे न दिवानिशम् ॥५१॥
एवं वर्षसहस्रं तद्गतमेव मुहूर्तवत् । कृत्वा विहारं सुचिरं स विरक्तो बभूव ह ॥५२॥
जगाम तपसे विन्ध्यशैलं तीर्थं तया सह । भारतेऽतिप्रशस्यं च पुलहाश्रममुत्तमम् ॥५३॥
तपस्तेपे नृपस्तत्र दिव्यवर्षसहस्रकम् । मोक्षाकाङ्क्षी निःस्पृहश्च निराहारः कृशोदरः ॥५४॥
मूर्छामाप मुनिश्रेष्ठ ध्यात्वा कृष्णपदाम्बुजम् । तद्गात्रव्याप्तवल्मीकं साध्वी दूरं चकार सा ॥५५॥
निश्चेष्टितं पतिं दृष्ट्वा त्यक्तं प्राणैश्च पञ्चभिः । मांसशोणितरक्तं तमस्थिसंसक्तविग्रहम् ॥५६॥
उच्चै रुरोद शोकार्ता निर्जने तु कलावती । हे नाथनाथेत्युच्चार्य कृत्वा वक्षसि मूर्छितम् ॥५७॥
विललाप महादीना पतिव्रतपरायणा । दृष्ट्वा नृपं निराहारं कृशं धमनिसंयुतम् ॥५८॥
श्रुत्वा च रोदनं तस्याः कृपया च कृपानिधिः । आविर्बभूव जगतां विधाता कमलोद्भवः ॥५९॥
क्रोडे कृत्वा च तं तूर्णं रुरोद भगवान्विभुः । ब्रह्मा कमण्डलुजलेनासिच्य नृपविग्रहम् ॥६०॥
जीवं संचारयामास ब्रह्मज्ञानेन ब्रह्मवित् । नृपेन्द्रश्चेतनां प्राप्य पुरो दृष्ट्वा प्रजापतिम् ॥६१॥

प्रणनाम च तं दृष्ट्वा तं च कामसमप्रभम् । तमुवाचेति संतुष्टो वरं वृणु यथेप्सितम् ॥६२॥
स विधेर्वचनं श्रुत्वा वव्रे निर्वाणमीप्सितम् । दयानिधे त्वं दयया वरं दातुं समुद्यतः ॥६३॥
प्रसन्नवदनः श्रीमान्स्मेराननसरोरुहः । कृत्वानुमानं मनसि शुष्ककण्ठोष्ठतालुका ॥६४॥
तमुवाच सती त्रस्ता वरं दातुं समुद्यतम् ।
कलावत्युवाच ॥
यदि मुक्तिं नृपेन्द्राय ददासि कमलोद्भव ॥६५॥
अतोऽबलाया हे ब्रह्मन्का गतिर्भविता वद । विना कान्तं च कान्तानां का शोभा चतुरानन ॥६६॥
व्रतं पतिव्रतायाश्च पतिरेव श्रुतौ श्रुतम् । गुरुश्चाभीष्टदेवश्च तपोधर्ममयः पतिः ॥६७॥
सर्वेषां च प्रियतरो न बन्धुः स्वामिनः परः । सर्वधर्मात्परा ब्रह्मन्पतिसेवा सुदुर्लभा ॥६८॥
स्वामिसेवाविहीनायाः सर्वं तन्निष्फलं भवेत् । व्रतं दानं तपः पूजा जपहोमादिकं च यत् ॥६९॥
स्नानं च सर्वतीर्थेषु पृथिव्याश्च प्रदक्षिणम् । दीक्षा च सर्वयज्ञेषु महादानानि यानि च ॥७०॥
पठनं सर्ववेदानां सर्वाणि च तपांसि च । वेदज्ञानां ब्राह्मणानां भोजनं देवसेवनम् ॥७१॥
एतानि स्वामिसेवायाः कलां नार्हन्ति षोडशीम् । स्वामिसेवाविहीना या वदन्ति स्वामिने कटुम् ॥७२॥
पतन्ति कालसूत्रे च यावच्चन्द्रदिवाकरौ । सर्पप्रमाणाः कृमयो दंशन्ति च दिवानिशम् ॥७३॥
संततं विपरीतं च कुर्वन्ति शब्दमुल्बणम् । मूत्रश्लेष्मपुरीषाणां कुर्वन्ति भक्षणं मुदा ॥७४॥
मुखे तासां ददत्येवमुल्कां च यमकिङ्कराः । भुक्त्वा भोगं च नरके कृमियोनिं प्रयान्ति ताः ॥७६॥
भक्षनित जन्मशतकं रक्तमांसपुरीषकम् । श्रुत्वाहं विदुषां वक्त्राद्वेदवाक्येषु निश्चितम् ॥७६॥
जानामि किञ्चिदबला त्वं वेदजनको विभुः । गुरोर्गुरुश्च विदुषां योगिनां ज्ञानिनां तथा ॥७७॥
सर्वज्ञमेवंभूतं त्वां बोधयामि किमच्युत । प्राणाधिकोऽयं कान्तोऽयं यदि मुक्तो बभूव ह ॥७८॥
मम को रक्षिता ब्रह्मन्धर्मस्य यौवनस्य च । कौमारे रक्षिता तातो दत्त्वा पात्राय सत्कृती ॥७९॥
सर्वदा रक्षिता कान्तस्तदभावे च तत्सुतः । त्रिष्ववस्थासु नारीणां त्रातारश्च त्रयः स्मृताः ॥८०॥
याः स्वतनत्राश्च ता नष्टाः सर्वधर्मबहिष्कृताः । असत्कुलप्रसूतास्ताः कुलटा दुष्टमानसाः ॥८१॥
शतजन्मकृतं पुण्यं तासां नश्यति पद्मज । पुत्रस्नेहो यथा बाल्ये तथा यूनि च वार्द्धके ॥८२॥
पतिव्रतानां कान्ते च सर्वकाले समा स्पृहा । सुते स्तनंधये स्नेहो मातॄणां चातिशोभिते ॥८३॥
पतिस्नेहस्य साध्वीनां कलां नार्हन्ति षोडशीम् । स्तनान्धे स्तनदानान्तमिष्टान्ने भोजनावधि ॥८४॥
कान्ते चित्तं सतीनां च स्वप्ने ज्ञाने च सन्ततम् । दुःखान्तो बन्धुविच्छेदः पुत्राणां च ततोऽधिकः ॥८५॥
सुदारुणः स्वामिनश्च दुःखं नातः परं स्त्रियाः । अविदग्धा यथा दग्धा ज्वलदग्नौ विषादने ॥८६॥
तथा विदग्धा दग्धा स्याद्विदग्धविरहानले । नान्ने तृष्णा जले तृष्णा साध्वीनां स्वामिनं विना ॥८७॥
विरहाग्नौ मनो दग्धं वह्नौ शुष्कतृणं यथा । न हि कान्तात्परो बन्धुर्न हि कान्तात्परः प्रियः ॥८८॥
न हि कान्तात्परो देवो न हि कान्तात्परो गुरुः । न हि कान्तात्परो धर्मो न हि कान्तात्परं धनम् ॥८९॥
न हि कान्तात्परः प्राणा न हि कान्तात्परः स्त्रियाः । निमग्नं कृ ष्णपादाब्जे वैष्णवानां यथा मनः ॥९०॥
यथैकपुत्रे मातुश्च यथा स्त्रीषु च कामिनाम् । धनेषु कृपणानां च चिरकालार्जितेषु च ॥९१॥
यथा भयेषु भीतानां शास्त्रेषु विदुषां यथा । स्तनादाने शिशूनां च शिल्पेषु शिल्पिनां यथा ॥९२॥
यथा जारे पुंश्चलीनां साध्वीनां च तथा प्रिये । तं विना जीवितुं ब्रह्मन्क्षणमेकं न च क्षमम् ॥९३॥
मरणं जीवनं तासां जीवनं मरणाधिकम् । सद्भर्तृरहितानां च शोकेन हतचेतसाम् ॥
अन्यशोकनिमग्नानां कालेन पानभोजनात् ॥९४॥
विपरीतः कान्तशोको वर्द्धते भक्षणादहो । कर्मच्छाया सतीनां च सङ्गिनीनां सती वरा (?) ॥९५॥
इतरे भोगदेहान्ते साध्वी जन्मनि जन्मनि । करोषि चेज्जगद्धातरिमं मुक्तं मया विना ॥९६॥
त्वां शप्त्वाऽहं त्वयि विभो पश्य दास्यामि स्त्रीवधम् । श्रुत्वा कलावतीवाक्यमुवाच विस्मितो विधिः ॥
हितं पीयूषसदृशं भयसंविग्नमानसः ॥९७॥
ब्रह्मोवाच ॥
वत्से मुक्तिं न दास्यामि स्वामिनं च त्वया विना ॥९८॥
मुक्तं कर्तुं त्वया सार्द्धं साम्प्रतं नाहमीश्वरः । मातर्मुक्तिर्विना भोगाद्दुर्लभा सर्वसंमता ॥९९॥
निर्वाणतां समाप्नोति भोगी भोगविकृन्तने । कविवर्षं स्वर्गभोगं कुरुष्व स्वामिना सह ॥१००॥
ततस्तु युवयोर्जन्म भविता भारते सति । यदा भविष्यति सती कन्या ते राधिका स्वयम् ॥१०१॥
जीवन्मुक्तो तया सार्द्धं गोलोकं च गमिष्यथः । कतिकालं नृपश्रेष्ठ भुंक्ष्व भोगं स्त्रिया सह ॥१०२॥
साध्वी वै सत्त्वयुक्ता च मा मां शप्तुं त्वमर्हसि । जीवन्मुक्ताः समाः सन्तः कृष्णपादाब्जमानसाः ॥१०३॥
वाञ्छन्ति हरिदास्यं च दुर्लभं न च निर्वृतिम् । इत्युक्त्वा तौ वरौ दत्त्वा सन्तस्थौ पुरतस्तयोः ॥१०४॥

ययतुस्तौ तं प्रणम्य जगाम स्वालयं विधिः । आजग्मतुस्तौ कालेन भुक्त्वा भोगं च भारतम् ॥१०५॥
परं पुण्यप्रदं दिव्यं ब्रह्मादीनां च वाञ्छितम् । सुचन्द्रो वृषभानुश्च ललाभ जन्म गोकुले ॥१०६॥
पद्मावत्याश्च जठरे सुरभानस्य रेतसा । जातिस्मरो हरेरंशः शुक्लपक्षे यथा शशी ॥१०७॥
ववृधेऽनुदिनं तत्र व्रजगेहे व्रजाधिपः । सर्वज्ञश्च महायोगी हरिपादाब्जमानसः ॥१०८॥
नन्ददबन्धुर्वदान्यश्च रूपवान्गुणवान्सुधीः । कलावती कान्यकुब्जे बभूवायोनिसंभवा ॥१०९॥
जातिस्मरा महासाध्वी सुन्दरी कमलाकला । कान्यकुब्जे नृपश्रेष्ठो भनन्दन उरुक्रमः ॥११०॥
स तां संप्राप्य यागान्ते यज्ञकुण्डसमुत्थिताम् । नग्नां हसन्तीं रूपाढ्यां स्तनान्धामिव बालिकाम् ॥१११॥
तेजसा प्रज्वलन्तीं च प्रतप्तकनकप्रभाम् । कृत्वा वक्षसि राजेन्द्रः स्वकान्तायै ददौ मुदा ॥११२॥
मालावती स्तनं दत्त्वा तां पुपोष प्रहर्षिता । तदन्नप्राशनदिने सतां मध्ये शुभे क्षणे ॥११३॥
नामरक्षणकाले च वाग्बभूवाशरीरिणी । कलावतीति कन्याया नाम रक्ष नृपेति च ॥११४॥
इत्येवं वचनं श्रुत्वा तच्चकार महीपतिः । विप्रेभ्यो भिक्षुकेभ्यश्च बन्दिभ्यश्च धनं ददौ ॥११५॥
सर्वेभ्यो भोजयामास चकार सुमहोत्सवम् । कालेन सा रूपवती यौवनस्था बभूव ह ॥११६॥
अतीव सुन्दर श्यामा मुनिमानसमोहिनी । चारुचम्पकवर्णाभा शरच्चन्द्रनिभानना ॥११७॥
ईषद्धास्यप्रसन्नास्या प्रफुल्लपद्मलोचना । नितम्ब श्रोणिभारार्ता स्तनभारनता सती ॥११८॥
गच्छन्ती राजमार्गेण गजेन्द्रमन्दगामिनी । ददर्श नन्दः पथि तां गच्छन्तीं च मुदान्वितः ॥११९॥
जितेन्द्रियश्च ज्ञानी च मूर्च्छामाप तथाऽपि च । त्रस्तो लोकान्पथि गतांस्तूर्णं पप्रच्छ सादरम् ॥१२०॥
गच्छन्ती कस्य कन्येयमिति होवाच तं जनः । भनन्दनस्य नृपतेः कन्या नाम्ना कलावती ॥१२१॥
कमलाकलया धन्या संभूता नृपमन्दिरे । कौतुकेन च गच्छन्ती क्रीडार्थं सखिमन्दिरम् ॥१२२॥
व्रज व्रज व्रजश्रेष्ठेत्युक्त्वा लोको जगाम ह । प्रहृष्टमानसो नन्दो जगाम राजमन्दिरम् ॥१२३॥
अवरुह्य रथात्तूर्णं विवेश नृपतेः सभाम् । उत्थाय राजा संभाष्य स्वर्णसिंहासनं ददौ ॥१२४॥
इष्टालापं बहुतरं चकार च परस्परम् । विनयावनतो नन्दः सम्बन्धोक्तिं चकार ह ॥१२५॥
नन्द उवाच ॥
शृणु राजेन्द्र वक्ष्यामि विशेषवचनं शुभम् । संबन्धं कुरु कन्याया विशिष्टेन च साम्प्रतम् ॥१२६॥
सुरभानुसुतः श्रीमान्वृषभानुर्व्रजाधिपः । नारायणांशो गुणवान्सुन्दरश्च सुपण्डितः ॥१२७॥
स्थिरयौवनयुक्तश्च योगी जातिस्मरो युवा । कन्या तेऽयोनिसंभूता यज्ञकुण्डसमुद्भवा ॥१२८॥
त्रैलोक्यमोहिनी शान्ता कमलांशा कलावती । स च योग्यस्त्वद्दुहितुस्तद्योग्या ते च कन्यका ॥१२९॥
विदग्धाया विदग्धेन संबन्धो गुणवान्नृप । इत्येवमुक्त्वा नन्दस्तु विरराम च संसदि ॥
उवाच तं नृपश्रेष्ठो विनयावनतो मुने ॥१३०॥
भनन्दन उवाच ॥
संबन्धो हि विधिवशो न मे साध्यो व्रजाधिप ॥१३१॥
प्रजापतिर्योगकर्ता जन्मदाताऽहमेव च । का कस्य पत्नी कन्या वा वरः को वा ससाधनः ॥१३२॥
कर्मानुरूपफलदः सर्वेषां कारणं विधिः । भवितव्यं कृतं कर्म तदमोघं श्रुतौ श्रुतम् ॥१३३॥
अन्यथा निष्फलं सर्वमनीशस्योद्यमो यथा । वृषभानुप्रिया धात्रा लिखिता चेत्सुता मम ॥१३४॥
पुरा भूतैव को वाऽहं केनान्येन निवार्यते । इत्येवमुक्त्वा राजेन्द्रो विनयानतकन्धरः ॥१३५॥
मिष्टान्नं भोजयामास सादरेण च नारद । नृपानुज्ञामुपादाय व्रजराजो व्रजं गतः ॥१३६॥
गत्वा स कथयामास सुरभानस्य संसदि । सुरभानश्च यत्नेन नन्दनेन च सादरम् ॥१३७॥
संबन्धं योजयामास गर्गद्वारा च सत्वरम् । विवाहकाले राजेन्द्रो विपुलं यौतकं ददौ ॥१३८॥
गजरत्नमश्वरत्नं रत्नानि मणिभूषणम् । वृषभानुर्मुदा युक्तः प्राप्य तां च कलावतीम् ॥१३९॥
रेमे सुनिर्जने रम्ये बुबुधे न दिवानिशम् । चक्षुर्निमेषविरहाद्व्याकुलां स्वामिना विना ॥१४०॥
व्याकुलो वृषभानुश्च क्षणेन च तया विना । जातिस्मरा च सा कन्या मायामानुषरूपिणी ॥१४१॥
जातिस्मरो हरेरंशो वृषभानो मुदाऽन्वितः । ववृधे च तयोः प्रेम नित्यंनित्यं नवंनवम् ॥१४२॥
सदा सकामा सा प्रौढा स च कामसमो युवा । तयोः कन्या च कालेन राधिका सा बभूव ह ॥
दैवात्सुदाम शापेन श्रीकृष्णस्याज्ञया पुरा ॥१४३॥
अयोनिसंभवा सा च कृष्णप्राणाधिका सती । यस्या दर्शनमात्रेण तौ विमुक्तौ बभूवतुः ॥१४४॥
इतिहासश्च कथितः प्रकृतं शृणु साम्प्रतम् । पापेन्धनानां दाहे च ज्वलदग्निशिखोपमः ॥१४५॥
वृषभानाश्रमं गत्वा शिल्पिनां प्रवरो मुदा । स्थानान्तरं विश्वकर्मा जगाम स्वगणैः सह ॥१४६॥
क्रोशमात्रं स्थलं चारु मनसाऽऽलोच्य तत्त्ववित् । आश्रमं कर्तुमारेभे नन्दस्य सुमहात्मनः ॥१४७॥
कृत्वाऽनुमानं बुद्ध्या च सर्वतोऽपि विलक्षणम् । परिखाभिर्गभीराभिश्चतुर्भिः संयुतं वरम् ॥१४८॥

दुर्लङ्घ्याभिर्वैरिभिश्च खनिताभिश्च प्रस्तरैः । पुष्पोद्यानैः पुष्पिताभिः पारावारेषु पुष्पितैः ॥१४९॥
चारु चम्पकवृक्षैश्च पुष्पितैः सुमनोहरैः । परितो वासिताभिश्च सुगन्धिवायुना मुने ॥१५०॥
आम्रैर्गुडालैः पनसैः खर्जूरैर्नारिकेलकैः । दाडिमैः श्रीफलैर्भृङ्गैर्जम्बीरैर्नागरङ्गकैः ॥१५१॥
तुङ्गैराम्रातकैर्जम्बुसमूहैश्च फलान्वितैः । कदलीनां केतकीनां कदम्बानां कदम्बकैः ॥१५२॥
सर्वतः शोभिताभिश्च फलैस्तैः पुष्पितैरहो । क्रीडार्हाभिर्निगूढाभिर्वाञ्छिताभिश्च सर्वदा ॥१५३॥
परिखानां रहः स्थाने चकार मार्गमुत्तमम् । दुर्गमं परवर्गाणां स्वानां च सुगमं सदा ॥१५४॥
संकेतेन मणिस्तम्भैश्छादितैः स्वल्पपाथसा । स्तम्भसीमाकृतमहो न सङ्कीर्णं न विस्तृतम् ॥१५५॥
परिखोपरिभागे च प्राकारं सुमनोहरम् । धनुःशतप्रमाणं च चकारातिसमुच्छ्रितम् ॥१५६॥
प्रस्तरस्य प्रमाणं च पञ्चविंशतिहस्तकम् । सिन्दूराकारमणिभिर्निर्मितं चातिसुन्दरम् ॥१५७॥
बाह्ये द्वाभ्यां च संयुक्तमन्तरे सप्तभिस्तथा । द्वाभिश्च सन्निरुद्धाभिर्मणिसारकपाटकैः ॥१५८॥
हरिन्मणीनां कलशैश्चित्रयुक्तैर्विराजितम् । मणिसारविकारैश्च कपाटैश्च सुशोभितम् ॥१५९॥
स्वर्णसारविनिर्माणकलशोज्ज्वलशेखरम् । नन्दालयं विनिर्माय बभ्राम नगरं पुनः ॥१६०॥
राजमार्गांश्च विविधान्स च चारूंश्चकार ह । रक्तभानुविकारैश्च वेदीभिश्च सुपत्तनैः ॥१६१॥
पारावारे च परितो निबन्धांश्च मनोहरान् । वाणिज्यार्हैश्च वणिजां परितो मणिमण्डपैः ॥१६२॥
सर्वतो दक्षिणे वामे ज्वलद्भिश्च विराजितान् । ततो वृन्दावनं गत्वा निर्ममे रासमण्डलम् ॥१६३॥
सुन्दरं मण्डलाकारं मणिप्राकारसंयुतम् । परितो योजनायामं मणिवेदिभिरन्वितम् ॥१६४॥
मणिसारविकारैश्च मण्डपैर्नवकोटिभिः । शृङ्गारार्हैश्च चित्राढ्यै रतितल्पसमन्वितैः ॥१६५॥
नानाजातिप्रसूनानां वायुना सुरभीकृतैः । रत्नप्रदीपसंयुक्तैः सुवर्णकलशोज्ज्वलैः ॥१६६॥
पुष्पोद्यानैः पुष्पितैश्च सरोभिश्च सुशोभितम् । रासस्थलं विनिर्माय जगामान्यत्स्थलं पुरः ॥१६७॥
दृष्ट्वा वृन्दावनं रम्यं परितुष्टो बभूव ह । वृन्दावनाभ्यन्तरे च स्थानेस्थाने सुनिर्जने ॥१६८॥
कृत्वा परिमितं बुद्ध्या मनसालोच्य यत्नतः । विलक्षणानि रम्याणि तत्र त्रिंशद्वनानि च ॥१६९॥
राधामाधवयोरेव क्रीडार्थं च विनिर्ममे । ततो मधुवनाभ्याशे निर्जनेऽतिमनोहरे ॥१७०॥
वटमूलसमीपे च सरसः पश्चिमे तटे । चम्पकोद्यानपूर्वायां केतकीवनमध्यतः ॥१७१॥
पुनस्तयोश्च क्रीडार्थं चकार रत्नमण्डपम् । चतुर्भिर्वेदिकाभिश्च परीतमतिसुन्दरम् ॥१७२॥
सद्रत्नसाररचितै राजितं तूलिकाशतैः । अमूल्यरत्नरचितैर्नानाचित्रेण चित्रितैः ॥१७३॥
कपाटैर्नवभिर्युक्तं नवद्वारैर्मनोहरैः । रत्नेन्द्रचित्रकलशैः कृत्रिमैश्च त्रिकोटिभिः ॥१७४॥
परितः परितो भित्त्यामूर्ध्वं च परिशोभितम् । महामणीन्द्रविकृतैरारोहैर्नवभिर्वृतम् ॥१७५॥
सद्रत्नसाररचितकलशोज्ज्वलशेखरम् । पताकातोरणैर्युक्तं शोभितं श्वेतचामरैः ॥१७६॥
सर्वतः पुरतो दीप्तममूल्यरत्न दर्पणैः । धनुःप्रमाणशतकमूर्ध्वमग्निशिखोपमम् ॥१७७॥
शतहस्तप्रमाणं च प्रस्तारं वर्तुलाकृतिम् । शोभितं रत्नकल्पैश्च तदभ्यन्तरमुत्तमम् ॥१७८॥
वह्निशुद्धांशुकैर्वस्त्रैर्मालाजालविचित्रितैः । पारिजातप्रसूनानां माल्योपधानसंयुतैः ॥१७९॥
चन्दनागुरुकस्तूरीकुङ्कुमैः सुरभीकृतम् । नवशृङ्गारयोग्यैश्च कामवर्द्धनकारिभिः ॥१८०॥
मालतीचम्पकानां च पुष्पराजिभिरन्वितम् । सकर्पूरैश्च ताम्बूलैः सद्रत्नपात्रसंस्थितैः ॥१८१॥
वज्रसारेण खचितैर्मुक्ताजालविलम्बिभिः । रत्नसारघटाकीर्णं रत्नपीठैः सुसंयुतम् ॥१८२॥
रत्नसिंहासनैर्युक्तं रत्नचित्रेण चित्रितैः । क्षरितैश्चन्द्रकान्तैश्च सुसिक्तं जलबिन्दुभिः ॥१८३॥
शीतवासिततोयेन संयुक्तं भोगवस्तुभिः । कृत्वा रतिगृहं रम्यं नगरं च पुनर्ययौ ॥१८४॥
यानि येषां मन्दिराणि तन्नामानि लिलेख सः । मुदा युक्तो विश्वकर्मा शिष्यैर्यक्षगणैः सह ॥१८५॥
निदेशं निद्रितं नत्वा प्रययौ स्वालयं मुने । सर्वत्रैवं सुकृतिनां समस्तं भगवत्कृपा ॥१८६॥
नेहाश्चर्यं च नगरं बभूवेशेच्छया भुवि । इत्येवं कथितं सर्वं हरेश्चरितमङ्गलम् ॥
सुखदं पातकहरं किं भूयः श्रोतुमिच्छसि ॥१८७॥

नारद उवाच ॥

कथं वृन्दावनं नाम काननस्यास्य भारते । व्युत्पत्तिरस्य संज्ञा वा तत्त्वं वद सुतत्त्ववित् ॥१८८॥

सूत उवाच ॥

नारदस्य वचः श्रुत्वा ऋषिर्नारायणो मुदा । प्रहस्योवाच निखिलं तत्त्वमेव पुरातनम् ॥१८९॥

नारायण उवाच ॥

पुरा केदारनृपतिः सप्तद्वीपपतिः स्वयम् ॥१९०॥
आसीत्सत्ययुगे ब्रह्मन्सत्यधर्मरतः सदा । स रेमे सह नारीभिः पुत्रपौत्रगणैः सह ॥१९१॥
पुत्रानिव प्रजाः सर्वाः पालयामास धार्मिकः । कृत्वा क्रतुशतं राजा लेभे नेन्द्रत्वमीप्सितम् ॥१९२॥

कृत्वा नानाविधं पुण्यं फलकांक्षी न च स्वयम् । नित्यं नैमित्तिकं सर्वं श्रीकृष्णप्रीतिपूर्वकम् ॥१९३॥
केदारतुल्यो राजेन्द्रो न भूतो भविता पुनः । पुत्रेषु राज्यं संन्यस्य प्रियां त्रैलोक्यमोहिनीम् ॥१९४॥
जैगीषव्योपदेशेन जगाम तपसे वनम् । हरेरैकान्तिको भक्तो ध्यायते संततं हरिम् ॥१९५॥
शश्वत्सुदर्शनं चक्रमस्ति यत्सन्निधौ मुने । चिरं तस्वा मुनिश्रेष्ठो गोलोकं च जगाम सः ॥१९६॥
केदारं नाम तीर्थं च तन्नाम्ना च बभूव ह । तत्राद्यापि मृतः प्राणी सद्यो मुक्तो भवेद्ध्रुवम् ॥१९७॥
कमलांशा तस्य कन्या नाम्ना वृन्दा तपस्विनी । न वव्रे सा वरं कंचिद्योगशास्त्रविशारदा ॥१९८॥
दत्तो दुर्वाससा तस्यै हरेर्मन्त्रः सुदुर्लभः । सा विरक्ता गृहं त्यक्त्वा जगाम तपसे वनम् ॥१९९॥
षष्टिवर्षसहस्राणि तपस्तेपे सुनिर्जने । आविर्बभूव श्रीकृष्णस्तत्पुरो भक्तवत्सलः ॥२००॥
प्रसन्नवदनः श्रीमान्वरं वृण्वित्युवाच सः । दृष्ट्वा सा राधिका कान्तं शान्ते सुन्दरविग्रहम् ॥२०१॥
मूर्च्छां संप्राप सा सद्यः कामबाणप्रपीडिता । सा च शीघ्रं वरं वव्रे पतिस्त्वं मे भवेति च ॥२०२॥
ओमित्युक्त्वा च रहसि चिरं रेमे तया सह । सा जगाम च गोलोकं कृष्णेन सह कौतुकात् ॥२०३॥
राधा समा सा सौभाग्याद्गोपीश्रेष्ठा बभूव ह । वृन्दा यत्र तपस्तेपे तत्तु वृन्दावनं स्मृतम् ॥२०४॥
वृन्दयाऽत्र कृता क्रीडा तेन वा मुनिपुंगव । अथाऽन्यं चेतिहासं च शृणुष्व वत्स पुण्यदम् ॥२०५॥
येन वृन्दावनं नाम निबोध कथयामि ते । कुशध्वजस्य कन्ये द्वे धर्मशास्त्रविशारदे ॥२०६॥
तुलसीवेदवत्यौ च विरक्ते भवकर्मणि । तपस्तप्त्वा वेदवती प्राप नारायणं परम् ॥२०७॥
सीता जनककन्या सा सर्वत्र परिकीर्तिता । तुलसी च तपस्तप्त्वा वाञ्छां कृत्वा हरिं प्रति ॥२०८॥
दैवाद्दुर्वाससः शापात्प्राप्य शङ्खासुरं प्रति । पश्चात्संप्राप्य कमलाकान्तं कान्तं मनोहरम् ॥२०९॥
सा चैव हरिशापेन वृक्षरूपा सुरेश्वरी । तस्याः शापेन च हरिः शालग्रामो बभूव ह ॥२१०॥
तथा तस्थौ च सततं शिलावक्षसि सुन्दरी । विस्तीर्णं कथितं सर्वं तुलसीचरितं च ते ॥
तथाऽपि च प्रसङ्गेन किञ्चिदुक्तं मुने पुनः ॥२११॥
तस्याश्च तपसः स्थानं तदिदं च तपोधन । तेन वृन्दावनं नाम प्रवदन्ति मनीषिणः ॥२१२॥
अथ वा ते प्रवक्ष्यामि परं हेत्वन्तरं शृणु । येन वृन्दावनं नाम पुण्यक्षेत्रस्य भारते ॥२१३॥
राधाषोडशनाम्नां च वृन्दानाम श्रुतौ श्रुतम् । तस्याः क्रीडावनं रम्यं तेन वृन्दावनं स्मृतम् ॥२१४॥
गोलोके प्रीतये तस्याः कृष्णेन निर्मितं पुरा । क्रीडार्थं भुवि तन्नाम्ना वनं वृन्दावनं स्मृतम् ॥२१५॥
नारद उवाच ॥
कानि षोडश नामानि राधिकाया जगद्गुरो । तानि मे वद शिष्याय श्रोतुं कौतूहलं मम ॥२१६॥
श्रुतं नाम्नां सहस्रं च सामवेदे निरूपितम् । तथाऽपि श्रोतुमिच्छामि त्वत्तो नामानि षोडश ॥२१७॥
अभ्यन्तराणि तेषां वा तदन्यान्येव मे विभो । अहो पुण्यस्वरूपाणि भक्तानां वाञ्छितानि च ॥२१८॥
नामानि तेषां व्युत्पत्तिं सर्वेषां दुर्लभानि च । पावनानि जगन्मातुर्जगतामपि कारणम् ॥२१९॥
श्रीनारायण उवाच ॥
राधा रासेश्वरी रासवासिनी रसिकेश्वरी । कृष्णप्राणाधिका कृष्णप्रिया कृष्णस्वरूपिणी ॥२२०॥
कृष्णवामाङ्गसंभूता परमानन्दरूपिणी । कृष्णा वृन्दावनी वृन्दा वृन्दावनविनोदिनी ॥२२१॥
चन्द्रावती चन्द्रकान्ता शतचन्द्रनिभानना । नामान्येतानि साराणि तेषामभ्यन्तराणि च ॥२२२॥
राधेत्येवं च संसिद्धा राकारो दानवाचकः । स्वयं निर्वाणदात्री या सा राधा परिकीर्तिता ॥२२३॥
रासेश्वरस्य पत्नीयं तेन रासेश्वरी स्मृता । रासे च वासो यस्याश्च तेन सा रासवासिनी ॥२२४॥
सर्वासां रसिकानां च देवीनामीश्वरी परा । प्रवदन्ति पुरा सन्तस्तेन तां रसिकेश्वरीम् ॥२२५॥
प्राणाधिका प्रेयसी सा कृष्णस्य परमात्मनः । कृष्णप्राणाधिका सा च कृष्णेन परिकीर्तिता ॥२२६॥
कृष्णस्यातिप्रिया कान्ता कृष्णो वाऽस्याः प्रियः सदा । सर्वैर्देवगणैरुक्ता तेन कृष्णप्रिया स्मृता ॥२२७॥
कृष्णारूपं सन्निधातुं या शक्ता चावलीलया । सर्वांशैः कृष्णसदृशी तेन कृष्णस्वरूपिणी ॥२२८॥
वामाङ्गार्धेन कृष्णस्य या संभूता परा सती । कृष्णवामाङ्गसंभूता तेन कृष्णेन कीर्तिता ॥२२९॥
परमानन्दराशिश्च स्वयं मूर्तिमती सती । श्रुतिभिः कीर्तिता तेन परमानन्दरूपिणी ॥२३०॥
कृषिर्मोक्षार्थवचनो न एवोत्कृष्टवाचकः । आकारो दातृवचनस्तेन कृष्णा प्रकीर्तिता ॥२३१॥
अस्ति वृन्दावनं यस्यास्तेन वृन्दावनी स्मृता । वृन्दावनस्याधिदेवी तेन वाऽथ प्रकीर्तिता ॥२३२॥
संघः सखीनां वृन्दः स्यादकारोऽप्यस्तिवाचकः । सखिवृन्दोऽस्ति यस्याश्च सा वृन्दा परिकीर्तिता ॥२३३॥
वृन्दावने विनोदश्च सोऽस्या ह्यस्ति च तत्र वै । वेदा वदन्ति तां तेन वृन्दावनविनोदिनीम् ॥२३४॥
नखचन्द्रावलीवक्त्रचन्द्रोऽस्ति यत्र संततम् । तेन चन्द्रावली सा च कृष्णेन परिकीर्तिता ॥२३५॥
चन्द्रतुल्या कान्तिरस्ति सदा यस्या दिवानिशम् । सा चन्द्रकान्ता हर्षेण हरिणा परिकीर्तिता ॥२३६॥
शरच्चन्द्रप्रभा यस्याश्चानेऽस्ति दिवानिशम् । मुनिना कीर्तिता तेन शरच्चन्द्रप्रभानना ॥२३७॥

इदं षोडशनामोक्तमर्थव्याख्यानसंयुतम् । नारायणेन यद्दत्तं ब्रह्मणे नाभिपङ्कजे ॥२३८॥
ब्रह्मणा च पुरा दत्तं धर्माय जनकाय मे । धर्मेण कृपया दत्तं मह्यमादित्यपर्वणि ॥२३९॥
पुष्करे च महातीर्थे पुण्याहे देवसंसदि । राधाप्रभावप्रस्तावे सुप्रसन्नेन चेतसा ॥२४०॥
इदं स्तोत्रं महापुण्यं तुभ्यं दत्तं मया मुने । निन्दकायावैष्णवाय न दातव्यं महामुने ॥२४१॥
यावज्जीवमिदं स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः । राधामाधवयोः पादपद्मे भक्तिर्भवेदिह ॥२४२॥
अन्ते लभेत्तयोर्दास्यं शश्वत्सहचरो भवेत् । अणिमादिकसिद्धिं च संप्राप्य नित्यविग्रहम् ॥२४३॥
व्रतदानोपवासैश्च सर्वैर्नियमपूर्वकैः । चतुर्णां चैव वेदानां पाठैः सर्वार्थसंयुतैः ॥२४४ ॥
सर्वेषां यज्ञतीर्थानां करणैर्विधिबोधितैः । प्रदक्षिणेन भूमेश्च कृत्स्नाया एव सप्तधा ॥२४५॥
शरणागतरक्षायामज्ञानां ज्ञानदानतः । देवानां वैष्णवानां च दर्शनेनापि यत्फलम् ॥२४६॥
तदेव स्तोत्रपाठस्य कलां नार्हति षोडशीम् । स्तोत्रस्यास्य प्रभावेण जीवन्मुक्तो भवेन्नरः ॥२४७॥
नारद उवाच ॥
संप्राप्तं परमाश्चर्यं स्तोत्रं सर्वसुदुर्लभम् । कवचं चापि देव्याश्च संसारविजयं प्रभो ॥२४८॥
कृतं स्तोत्रं सुयत्नेन प्राप्तं तदपि दुर्लभम् । श्रुत्वा कृष्णकथां चित्रां त्वत्पादाब्जप्रसादतः ॥२४९॥
अधुना श्रोतुमिच्छामि यद्रहस्यं च तद्वद । प्रातश्च नगरं दृष्ट्वा किमूचुर्बल्लवा मुने ॥२५०॥
श्रीनारायण उवाच ॥
गतायां तत्र यामिन्यां गते च विश्वकर्मणि । अरुणोदयवेलायां जनाः सर्वे जजागरुः ॥२५१॥
उत्थाय दृष्ट्वा नगरं सर्वेभ्योऽपि विलक्षणम् । किमाश्चर्यं किमाश्चर्यमित्यूचुर्व्रजवासिनः ॥२५२॥
काश्चिद्वोपान्केचिदूचुः कुत एतदभूदिदम् । न जाने केन रूपेण को भूमौ प्रभवेदिति ॥२५३॥
बुबुधे मनसा नन्दो गर्गवाक्यमनुस्मरन् । श्रीहरेरिच्छया सर्वं जगदेतच्चराचरम् ॥२५४॥
ब्रह्मादितृणपर्यन्तं यस्य भ्रूभङ्गलीलया । आविर्भूतं तिरोभूतं तस्यासाध्यं च किं कुतः ॥२५५॥
विवरेष्वेव यल्लोम्नां ब्रह्माण्डान्यखिलानि च । ईशस्य तन्महाविष्णोः किमसाध्यं हरेरहो ॥२५६॥
ब्रह्मान्नतेशधर्माश्च ध्यायन्ते यत्पदाम्बुजम् । किमसाध्यं तदीशस्य मायामानुषरूपिणः ॥२५७॥
भ्रामंभ्रामं तन्नगरं दर्शंदर्शं गृहंगृहम् । पाठंपाठं च नामानि सर्वेभ्यो निलयं ददौ ॥२५८॥
कृत्वा शुभक्षणं नन्दो वृषभानश्च कौतुकी । चकार सगणैः सार्द्धं मुदाऽऽश्रमनिवेशनम् ॥२५९॥
सर्वे वृन्दावनस्थाश्च प्रसन्नवदनेक्षणाः । मुदा प्रवेशनं चक्रुः स्वस्वमाश्रममुत्तमम् ॥२६०॥
सर्वे मुमुदिरे गोपाः स्वेस्वे स्थाने मनोहरे । बालका बालिकाश्चैव चिक्रीडुश्च प्रहर्षिताः ॥२६१॥
श्रीकृष्णो बलदेवश्च शिशुभिः सह कौतुकात् । क्रीडां चकार तत्रैव स्थानेस्थाने मनोहरे ॥२६२॥
इत्येवं कथितं सर्वं निर्माणं नगरस्य च । अबलानां वने रासमण्डलस्य च नारद ॥२६३॥

इति श्रीब्रह्मवैवर्ते महापुराणे नारायणनारदसंवादे श्रीवृन्दावननगरवर्णनं नाम सप्तदशोऽध्यायः ॥१७॥
आदितः श्लोकानां समष्ट्यङ्काः-११,६४८+२६३=११,९११



## ॥ अथाष्टादशोऽध्यायः ॥

शौनक उवाच ॥
अहो किमद्भुतं सूत रहस्यं सुमनोहरम् । श्रुतं कृष्णस्य चरितं सुखदं मोक्षदं परम् ॥१॥
सूत उवाच ॥
श्रुत्वा नगरनिर्माणं नारदो मुनिसत्तमः । पप्रच्छ कृष्णचरितमपरं सुमनोहरम् ॥२॥
नारद उवाच ॥
श्रीकृष्णाख्यानचरितं पीयूषमृषिसत्तम । ज्ञानसिन्धो निगद मां शिष्यं च शरणागतम् ॥३॥
नारदस्य वचः श्रुत्वा मुदा नारायणः स्वयम् । उवाच परमीशस्य चरितं परमाद्भुतम् ॥४॥
श्रीनारायण उवाच ॥
एकदा बालकैः सार्धं बलेन सह माधवः । जगाम श्रीमधुवनं यमुनातीरनीरजम् ॥५॥
विचेरुर्गोसहस्रैश्च चिक्रीडुर्बालकास्तदा । विश्रान्तास्तृट्परीताश्च क्षुधा च परिपीडिताः ॥६॥
तमूचुर्गोपशिशवः श्रीकृष्णं परया मुदा । क्षुदस्मान्बाधते कृष्ण किं कुर्मो ब्रूहि किङ्करान् ॥७॥
शिशूनां वचनं श्रुत्वा तानुवाच दयानिधिः । हितं तथ्यं च वचनं प्रसन्नवदनेक्षणः ॥८॥
श्रीकृष्ण उवाच ॥
बाला गच्छत विप्राणां यज्ञस्थानं सुखावहम् । अन्नं याचत ताञ्छीघ्रं ब्राह्मणांश्च ऋतून्मुखान् ॥९॥
विप्रा आङ्गिरसाः सर्वे स्वाश्रमे श्रीवनान्तिके । यज्ञं कुर्वन्ति विप्राश्च श्रुतिस्मृतिविशारदाः ॥१०॥

निःस्पृहा वैष्णवाः सर्वे मां यजन्ति मुमुक्षवः। मायया मां न जानन्ति मायामानुषरूपिणम्॥११॥
न चेद्ददति युष्मभ्यमन्नं विप्राः ऋतून्मुखाः । तत्कान्ता याचत क्षिप्रं दयायुक्ताः शिशून्प्रति ॥१२॥
श्रीकृष्णवचनं श्रुत्वा ययुर्बालकपुङ्गवाः । पुरतो ब्राह्मणानां च तस्थुरानम्रकंधराः॥१३॥
इत्यूचुर्बालकाः शीघ्रमन्नं दत्त द्विजोत्तमाः । न शुश्रुवुर्द्विजाः केचित्केचिच्छ्रुत्वा स्थिताः स्थिताः॥१४॥
ते ययू रन्धनागारं ब्राह्मण्यो यत्र पाचिकाः । गत्वा बाला विप्रभार्याः प्रणेमुर्नतकन्धराः॥१५॥
नत्वोचुर्बालकाः सर्वे विप्रभार्याः पतिव्रताः । अन्नं दत्त मातरोऽस्मान्क्षुधार्तान्बालकानपि॥१६॥
बालानां वचनं श्रुत्वा दृष्ट्वा तांश्च मनोहरान् । पप्रच्छुः सादरं साध्व्यः स्मेराननसरोरुहाः॥१७॥
विप्रपत्न्य ऊचुः॥
के यूयं प्रेषिताः केन कानि नामानि कोविदाः । दास्यामोऽन्नं बहुविधं व्यञ्जनैः सहितं वरम्॥१८॥
ब्राह्मणीनां वचः श्रुत्वा ता ऊचुस्ते मुदाऽन्विताः । स्निग्धा हसन्तः स्फीताश्च सर्वे गोपालबालकाः॥१९॥
बाला ऊचुः॥
प्रेषिता रामकृष्णाभ्यां वयं क्षुत्पीडिता भृशम् । दत्तान्नं मातरोऽस्मभ्यं क्षिप्रं यामस्तदन्तिकम्॥२०॥
इतो विदूरे भाण्डीरे वनाभ्यन्तरमेव च । वटमूले मधुवने वसन्तौ रामकेशवौ॥२१॥
विश्रान्तौ क्षुधितौ तौ च याचेतेऽन्नं च मातरः । किमु देयमदेयं वा शीघ्रं वदत नोऽधुना॥२२॥
गोपानां वचनं श्रुत्वा हृष्टानन्दाश्रुलोचनाः । पुलकाङ्कितसर्वाङ्गास्तत्पादाब्जमनोरथाः॥२३॥
नानाव्यञ्जनसंयुक्तं शाल्यन्नं सुमनोहरम् । पायसं पिष्टकं स्वादु दधि क्षीरं घृतं मधु॥२४॥
रौप्ये कांस्ये राजते च पात्रे कृत्वा मुदाऽन्विताः । ताः सर्वा विप्रपत्न्यश्च प्रययुः कृष्णसन्निधिम् ॥२५॥
नानामनोरथं कृत्वा मनसा गमनोत्सुकाः । पतिव्रतास्ता धन्याश्च श्रीकृष्णदर्शनोत्सुकाः॥२६॥
श्रीकृष्णं ददृशुर्गत्वा रामं च सह बालकम् । वटमूले वसन्तं तमुडुमध्ये यथोडुपम् ॥२७॥
श्यामं किशोरवयसं पीतकौशेयवाससम् । सुन्दरं सस्मितं शान्तं राधाकान्तं मनोहरम्॥२८॥
शरत्पार्वणचन्द्रास्यं रत्नालङ्कारभूषितम् । रत्नकुण्डलयुग्माभ्यां गण्डस्थलविराजितम्॥२९॥
रत्नकेयूरवलयरत्ननूपुरभूषितम् । आजानुलम्बितां शुभ्रां बिभ्रतं रत्नमालिकाम्॥३०॥
मालतीमालया कण्ठवक्षःस्थलविराजितम् । चन्दनागुरुकस्तूरीकुङ्कुमाञ्चितविग्रहम्॥३१॥
सुनखं सुकपोलं च पक्व बिम्बाधरं वरम् । पक्वदाडिमबीजाभं बिभ्रतं दन्तमुत्तमम्॥३२॥
शिखिपिच्छसमायुक्तं बद्धचूडं परात्परम् । कदम्बपुष्पयुग्माभ्यां कर्णमूले विराजितम्॥३३॥
ध्यानासाध्यं योगिनां च भक्तानुग्रहकातरम् । ब्रह्मेशधर्मशेषेन्द्रैः स्तूयमानं मुनीश्वरैः॥३४॥
दृष्ट्वैवमीश्वरं भक्त्या प्रणेमुर्द्विजयोषितः । स्वानां ज्ञानानुरूपं च तुष्टुवुर्मधुसूदनम्॥३५॥
विप्रपत्न्य ऊचुः॥
त्वं ब्रह्म परमं धाम निरीहो निरहङ्कृतिः । निर्गुणश्च निराकारः साकारः सगुणः स्वयम्॥३६॥
साक्षिरूपश्च निर्लिप्तः परमात्मा निराकृतिः । प्रकृतिः पुरुषस्त्वं च कारणं च तयोः परम्॥३७॥
सृष्टिस्थित्यन्तविषये ये च देवास्त्रयः स्मृताः । ते त्वदंशाः सर्वबीजा ब्रह्मविष्णुमहेश्वराः॥३८॥
यस्य लोम्नां च विवरे चाखिलं विश्वमीश्वर । महाविराण्महाविष्णुस्त्वं तस्य जनको विभो॥३९॥
तेजस्त्वं चापि तेजस्वी ज्ञानं ज्ञानी च तत्परः । वेदेऽनिर्वचनीयस्त्वं कस्त्वां स्तोतुमिहेश्वरः॥४०॥
महदादिसृष्टिसूत्रं पञ्चतन्मात्रमेव च । बीजं त्वं सर्वशक्तीनां सर्वशक्तिस्वरूपकः॥४१॥
सर्वशक्तीश्वरः सर्वः सर्वशक्त्याश्रयः सदा । त्वमनीहः स्वयंज्योतिः सर्वानन्दः सनातनः॥४२॥
अहोऽप्याकारहीनस्त्वं सर्वविग्रहवानपि । सर्वेन्द्रियाणां विषयं जानासि नेन्द्रियी भवान्॥४३॥
सरस्वती जडीभूता यत्स्तोत्रे यन्निरूपणे । जडीभूतो महेशश्च शेषो धर्मो विधिः स्वयम्॥४४॥
पार्वती कमला राधा सावित्री वेदसूरपि । वेदश्च जडतां याति के वा शक्ता विपश्चितः॥४५॥
वयं किं स्तवनं कुर्मः स्त्रियः प्राणेश्वरेश्वर । प्रसन्नो भव नो देव दीनबन्धो कृपां कुरु॥४६॥
इति पेतुश्च ता विप्रपत्न्यस्तच्चरणाम्बुजे । अभयं प्रददौ ताभ्यः प्रसन्नवदनेक्षणः॥४७॥
विप्रपत्नीकृतं स्तोत्रं पूजाकाले च यः पठेत् । स गतिं विप्रपत्नीनां लभते नात्र संशयः॥४८॥
नारायण उवाच॥
ताः पदाम्भोजपतिता दृष्ट्वा श्रीमधुसूदनः । वरं वृणुत कल्याणं भविता चेत्युवाच ह॥४९॥
श्रीकृष्णस्य वचः श्रुत्वा विप्रपन्त्यो मुदाऽन्विताः । तमूचुर्वचनं भक्त्या भक्तिनम्रात्मकन्धराः॥५०॥
द्विजपत्न्य ऊचुः॥
वरं कृष्ण न गृह्णीमो नः स्पृहा त्वत्पदाम्बुजे । देहि स्वं दास्यमस्मभ्यं दृढां भक्तिं सुदुर्लभाम्॥५१॥
पश्यामोऽनुक्षणं वक्त्रसरोजं तव केशव । अनुग्रहं कुरु विभो न यास्यामो गृहं पुनः॥५२॥
द्विजपत्नीवचः श्रुत्वा श्रीकृष्णः करुणानिधिः । ओमित्युक्त्वा त्रिलोकेशस्तस्थौ बालकसंसदि॥५३॥

प्रदत्तं विप्रपत्नीभिर्मिष्टमन्नं सुधोपमम् । बालकान्भोजयित्वा तु स्वयं च बुभुजे विभुः ॥५४॥
एतस्मिन्नन्तरे तत्र शातकुम्भं रथं परम् । ददृशुर्विप्रपत्न्यश्च पतन्तं गगनादहो ॥५५॥
रत्नदर्पणसंयुक्तं रत्नसारपरिच्छदम् । रत्नस्तम्भैर्निबद्धं च सद्रत्नकलशोज्ज्वलम् ॥५६॥
श्वेतचामरसंयुक्तं वह्निशुद्धांशुकान्वितम् । पारिजातप्रसूनानां मालाजालैर्विराजितम् ॥५७॥
शतचक्रसमायुक्तं मनोयायि मनोहरम् । वेष्टितं पार्षदैर्दिव्यैर्वनमालाविभूषितैः ॥५८॥
पीतवस्त्रपरीधानै रत्नालङ्कारभूषितैः । नवयौवनसंपन्नैः श्यामलैः सुमनोहरैः ॥५९॥
द्विभुजैर्मुरलीहस्तैर्गोपवेषधरैर्वरैः । शिखिपिच्छगुञ्जमालाबद्धवक्रिमचूडकैः ॥६०॥
अवरुह्य रथात्तूर्णं ते प्रणम्य हरेः पदम् । रथमारोहणं कर्तुमूचुर्ब्राह्मणकामिनीः ॥६१॥
विप्रभार्या हरिं नत्वा जग्मुर्गोलोकमीप्सितम् । बभूवुर्गोपिकाः सद्यस्त्यक्त्वा मानुषविग्रहान् ॥६२॥
हरिश्छायां विनिर्माय तासां च विष्णुमायया । प्रस्थापयामास गृहान्ब्राह्मणानां स्वयं विभुः ॥६३॥
विप्राश्च भार्या उद्दिश्य परमोद्विग्नमानसाः । अन्वेषणं प्रकुर्वन्तो ददृशुः पथि कामिनीः ॥६४॥
दृष्ट्वोचुर्ब्राह्मणाः सर्वे तास्ते च विनयान्विताः । पुलकाङ्कितसर्वाङ्गाः प्रसन्नवदनेक्षणाः ॥६५॥
ब्राह्मणा ऊचुः ॥
अहोऽतिधन्या यूयं च दृष्टो युष्माभिरीश्वरः । अस्माकं जीवनं व्यर्थं वेदपाठोऽप्यनर्थकः ॥६६॥
वेदे पुराणे सर्वत्र विद्वद्भिः परिकीर्तिताः । हरेर्विभूतयः सर्वाः सर्वेषां जनको हरिः ॥६७॥
तपो जपो व्रतं ज्ञानं वेदा ध्ययनमर्चनम् । तीर्थस्नानमनशनं सर्वेषां फलदो हरिः ॥६८॥
श्रीकृष्णः सेवितो येन किं तस्य तपसां फलैः । प्राप्तः कल्पतरुर्येन किं तस्यान्येन शाखिना ॥६९॥
श्रीकृष्णो हृदये यस्य तस्य किं कर्मभिः कृतैः । किं वा न सागरस्यैव पौरुषं कूपलङ्घने ॥७०॥
इत्येवमुक्त्वा विप्राश्च गृहीत्वा कामिनीवराः । आजग्मुः स्वगृहं हृष्टास्ताभिः सार्धं च रेमिरे ॥७१॥
तासां ततोऽधिकं प्रेम क्रीडासु सर्वकर्मसु । दाक्षिण्यं मायया शक्त्या ब्राह्मणानामतर्कितम् ॥७२॥
अथ नारायणः सोऽयं बलेन शिशुभिः सह । जगाम स्वालयं तूर्णं पूर्णब्रह्म सनातनः ॥७३॥
इत्येवं कथितं सर्वं हरेर्माहात्म्यमुत्तमम् । पुरा श्रुतं धर्मवक्त्रात्किं भूयः श्रोतुमिच्छसि ॥७४॥
नारद उवाच ॥
ऋषीन्द्र केन पुण्येन बभूव विप्रयोषिताम् । मुनीन्द्रयोगसिद्धानां दुर्लभा गतिरीश्वरी ॥७५॥
इमाः का वा पुण्यवत्यः पुरा तस्थुर्महीतलम् । आजग्मुः केन दोषेण वद संदेहभञ्जनम् ॥७६॥
श्रीनारायण उवाच ॥
सप्तर्षीणां रमण्यश्च रूपेणाप्रतिमाः पराः । गुणवत्यः सुशीलाश्च धर्मिष्ठाश्च पतिव्रताः ॥७७॥
नवीनयौवनाः सर्वाः पीनश्रोणि पयोधराः । दिव्यवस्त्रपरीधाना रत्नालङ्कारभूषिताः ॥७८॥
तप्तकाञ्चनवर्णाभाः स्मेराननसरोरुहाः । मुनीनां मोहितुं शक्ता मानसं वक्रचक्षुषा ॥७९॥
दृष्ट्वा तासां स्तनश्रोणिमुखानि सुन्दराणि च । अनलश्चकमे ताश्च मदनानलपीडितः ॥८०॥
अग्निस्थानस्थितानां च शिखया सुरतोन्मुखः । स्पृष्ट्वा चाङ्गानि तासां च बभूव हतचेतनः ॥८१॥
पतिव्रता न जानन्ति पतिपादाब्जमानसाः । अग्निरङ्गानि तासां च दर्शं दर्शं मुमोह च ॥८२॥
वह्नेश्च मानसं ज्ञात्वा भगवानङ्गिरा मुनिः । शशाप तं चेत्युवाच सर्वभक्षो भवेति ह ॥८३॥
वह्निः सचेतनो भूत्वा तुष्टाव मुनिपुंगवम् । व्रीडया नम्रवदनश्चकम्पे ब्रह्मतेजसा ॥८४॥
क्रुद्धो मुनिवरः स्पृष्टाः कामिन्यश्च शशाप ह । यात यूयं पापयुक्ता मानुषीं योनिमेव च ॥८५॥
भारते ब्राह्मणानां च गृहे लभत जन्म वै । करिष्यन्ति विवाहं च युष्माकं कुलजा द्विजाः ॥८६॥
श्रुत्वा वाक्यं मुनेस्ताश्च रुरुदुः प्रेमविह्वलाः । पुटाञ्जलियुताः सर्वा ऊचुस्तं विदुषां वरम् ॥८७॥
मुनिपत्न्य ऊचुः ॥
न त्यजास्मान्मुनिश्रेष्ठ निष्पापाश्च पतिव्रताः । अजानन्त्यः परस्पृष्टा न च नस्त्यक्तुमर्हसि ॥८८॥
भक्तानां किंकरीणां च न दण्डं कर्तुमर्हसि । युष्माकं चरणाम्भोजं कदा द्रक्ष्यामहे वयम् ॥८९॥
खड्गच्छेदाद्वज्रपातात्सर्वप्रहरणान्मुने । दारुणः कान्तविच्छेदः साध्वीनां दुःसहः सदा ॥९०॥
ब्रह्मिष्ठानां गुणवतां परान्कान्तान्महामुनीन् । एवंभूतान्कथं त्यक्त्वा यास्यामः पृथिवीतलम् ॥९१॥
यास्यामो यदि विप्रेश कदाऽत्रागमनं वद । अज्ञानस्पर्शदोषश्च न स्यान्नो विधिबोधितः ॥९२॥
अहल्यया पुनः प्राप्तः स्वामीन्द्रस्य प्रधर्षणात् । सा संभोगात्पुनः शुद्धा स्पर्शनाद्वर्जिता वयम् ॥९३॥
विचारं कुरु धर्मिष्ठ वेदवेदाङ्गपारग । विश्वकर्तुश्च पुत्रस्त्वं सर्ववेदविदां वर ॥९४॥
अन्येषां च भयात्कान्ता व्रजन्ति शरणं पतिम् । स्वकान्तभयसंविग्नाः शरणं कं व्रजन्ति ताः ॥९५॥
अभयं देहि धर्मिष्ठ भययुक्ताभ्य एव च । पुत्रे शिष्ये कलत्रे च को दण्डं कर्तुमक्षमः ॥९६॥
दुर्बलः सबलो वापि स्ववस्तूनामपीश्वरः । स्वद्रव्यविक्रयं कर्तुं न चान्यो रक्षितुं क्षमः ॥९७॥

कामिनीनां वचः श्रुत्वा दयालुर्मुनिपुंगवः । प्रेम्णा रुरोद तासां च निरीक्ष्य मुखपङ्कजम् ॥९८॥
वेदवेदाङ्गपारज्ञो ज्ञानिनां योगिनां वरः । पत्नीविच्छेदविषये मूर्च्छां प्राप तथापि सः ॥९९॥
सर्वे बभूवुः शोकार्ता विरहोद्विग्नमानसाः । निरीक्ष्य तासां वक्त्राणि तस्थुः पुत्तलिका यथा ॥१००॥
कृत्वा विलापं सुचिरं सर्ववेदविदां वरः । भ्रातृभिश्च सहालोच्य ता उवाच शुचाऽऽतुरः ॥१०१॥
अङ्गिरा उवाच ॥
यूयं शृणुत वक्ष्यामि वचनं सत्यमेव च । स्वकर्मभोगिनां भोगमाकर्माच्च श्रुतौ श्रुतम् ॥१०२॥
गतो भोगश्च युष्माकमस्माभिः सह निश्चितम् । गते भोगे पुनर्भोगो न हि वेदे निरूपितः ॥१०३॥
शुभाशुभं च यत्कर्म भारते कृतिभिः सह । नाभुक्तं क्षीयते कर्म जन्मकोटिशतैरपि ॥१०४॥
परभुक्तां च कान्तां च यो भुङ्क्ते स नराधमः । स पच्यते कालसूत्रे यावच्चन्द्रदिवाकरौ ॥१०५॥
न सा दैवे न सा पैत्र्ये पापार्हा पापसंयुता । तस्या आलिङ्गने भर्ता भ्रष्टश्रीस्तेजसा हतः ॥१०६॥
देवताः पितरस्तस्य हव्यदाने च तर्पणे । सुखिनो न भवन्त्येवमित्याह कमलोद्भवः ॥१०७॥
तस्माद्यत्नेन भार्याया रक्षणं कुरुते सुधीः । अन्यथा पापभाग्भर्ता निश्चितं नरकं व्रजेत् ॥१०८॥
पदेपदे सावधानः कान्तां रक्षति पण्डितः । न व्रती न स्थली योषा दोषाणां च करण्डिका ॥१०९॥
कलत्रं पाकपात्रं च सदा रक्षितुमर्हति । परस्पर्शादशुद्धां च शुद्धां स्वस्पर्शने सदा ॥११०॥
स्वकान्तं च परित्यज्य परं गच्छति याऽधमा । कुम्भीपाकं सा प्रयाति यावच्चन्द्रदिवाकरौ ॥१११॥
तामेव यमदूताश्च संस्थाप्य नरकान्तरे । उत्तिष्ठति विदूराच्चेत्कुर्वन्ति दण्डताडनाम् ॥११२॥
सर्पप्रमाणाः कीटाश्च तीक्ष्णदंष्ट्राः सुदारुणाः । दशन्ति पुंश्चलीं तत्र सततं च दिवानिशम् ॥११३॥
विकृताकारशब्दं च करोति शाश्वतं भिया । न ममार प्रहारेण सूक्ष्मदेहविधारिणी ॥११४॥
मुहूर्तार्धं सुखं भुक्त्वा लोकेऽत्र यशसा हता । पतिता परलोके च गतिमेतादृशीं लभेत् ॥११५॥
परस्पृष्टा च वै नारी या स्पृहां कुरुते परम् । साऽपि दुष्टा परित्याज्या चेत्याह कमलोद्भवः ॥११६॥
तस्मान्नारी परैर्यत्नाददृष्टा कृतिभिः कृता । असूर्यपश्या या दाराः शुद्धास्ताश्च पतिव्रताः ॥११७॥
स्वच्छन्दगामिनी या च स्वतन्त्रा सूकरीसमा । अन्तर्दुष्टा सदा सैव निश्चितं परगामिनी ॥११८॥
स्वामिसाध्या च या नारी कुलधर्मभिया स्थिता । कान्तेन सार्द्धं सा कान्ता वैकुण्ठं याति निश्चितम् ॥११९॥
यात यूयं च पृथिवीं मानुषीं योनिमीप्सिताम् । कृष्णदर्शनमात्रेण गोलोकं यास्यथ ध्रुवम् ॥१२०॥
हरिणा निर्मिताश्छाया युष्माकं योगमायया । ता विप्रमन्दिरे स्थित्वा चागमिष्यन्ति नो ध्रुवम् ॥१२१॥
पुनरंशेन नः पत्न्यो भविष्यथ न संशयः । युष्माकं मम शापश्च बभूव च वराधिकः ॥१२२॥
इत्येवमुक्त्वा स मुनिर्विरराम शुचाऽन्वितः । ता आगत्य महीं शापाद्बभूवुर्विप्रयोषितः ॥१२३॥
दत्त्वाऽन्नं हरये भक्त्या प्रजग्मुर्हरिमन्दिरम् । बभूव निश्चितं तासां शापश्च संपदोऽधिकः ॥१२४॥
निन्द्या नीचा च संपत्तिर्विपत्तिर्महतो वरा । अहो सद्यः सतां कोपश्चोपकाराय कल्पते ॥१२५॥
विना विपत्तेर्महिमा कुतः कस्य भवेद्भुवि । भूताः कान्तपरित्यागान्मुक्ता ब्राह्मणयोषितः ॥१२६॥
इत्येवं कथितं सर्वं हरेश्चरितमुत्तमम् । अहो पुण्यवतीनां च मोक्षाख्यानं मनोहरम् ॥१२७॥
श्रीकृष्णाख्यानं विप्रेन्द्र नूतनं नूतनं पदेपदे । न हि तृप्तिः श्रुतवतां केन श्रेयसि तृप्यते ॥१२८॥
यावद्रम्यं तत्कथितं यच्छ्रुतं गुरुवक्त्रतः । वद मां वाञ्छितं यत्ते किं भूयः श्रोतुमिच्छसि ॥१२९॥
नारद उवाच ॥
यद्यच्छ्रुतं त्वया पूर्वं गुरुवक्त्रात्कृपानिधे । मङ्गलं कृष्णचरितं तन्मे ब्रूहि जगद्गुरो ॥१३०॥
सूत उवाच ॥
श्रुत्वा देवर्षिवचनमृषिर्नारायणः स्वयम् । अपरं कृष्णमाहात्म्यं प्रवक्तुमुपचक्रमे ॥१३१॥
इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे विप्रपत्नीमोक्षणप्रस्तावोनामाष्टादशोऽध्यायः ॥१८॥
आदितः श्लोकानां समष्ट्यङ्काः-११,९११+१३१=१२,०४२



## ॥ अथाष्टादशोऽध्यायः ॥

श्रीनारायण उवाच ॥
एकदा बालकैः सार्धं बलदेवं विना हरिः । जगाम यमुनातीरं यत्र कालियमन्दिरम् ॥१॥
परिपक्वफलं भुक्त्वा यमुनातीरजे वने । स्वेच्छामयस्तृट्परीतः पपौ च निर्मलं जलम् ॥२॥
गोकुलं चारयामास शिशुभिः सह कानने । विजहार च तैः सार्द्धं स्थापयामास गोकुलम् ॥३॥
क्रीडानिमग्नचित्तोऽयं बालकाश्च मुदाऽन्विताः । भुक्त्वा नवतृणं गावो विषतोयं पपुर्मुने ॥४॥
विषाक्तं च जलं पीत्वा दारुणान्तकचेष्टया । ज्वालाभिः कालकूटानां सद्यः प्राणांश्च तत्यजुः ॥५॥

दृष्ट्वा मृतं गोसमूहं गोपाश्चिन्ताकुला भिया । विषण्णवदनाः सर्वे तमूचुर्मधुसूदनम् ॥६॥
ज्ञात्वा सर्वं जगन्नाथो जीवयामास गोकुलम् । उत्तस्थुस्तत्क्षणं गावो ददृशुः श्रीहरेर्मुखम् ॥७॥
कृष्णः कदम्बमारुह्य यमुनानीरतीरजम् । पपात सर्पभवने नागमध्ये नराकृतिः ॥८॥
शतहस्तप्रमाणं च जलोत्थानं बभूव ह । बाला हर्षं विषादं च मेनिरे तत्र नारद ॥९॥
सर्पो नराकृतिं दृष्ट्वा कालियः क्रोधविह्वलः । जग्राह श्रीहरिं तूर्णं तप्तलोहं यथा नरः ॥१०॥
दग्धकण्ठोदरो नागश्चोद्विग्नो ब्रह्मतेजसा । प्राणा यान्त्येवमुक्त्वा च चकारोद्वमनं पुनः ॥११॥
भग्नदन्तो रक्तमुखः कृष्णवज्राङ्गचर्वणात् । रक्तवक्त्रस्य भगवानुत्तस्थौ मस्तकोपरि ॥१२॥
नागो विश्वंभराक्रान्तः स प्राणांस्त्यक्तुमुद्यतः । चकार रक्तोद्वमनं पपात मूर्च्छितो मुने ॥१३॥
दृष्ट्वा तं मूर्छितं नागा रुरुदुः प्रेमविह्वलाः ॥१४॥
केचित्पलायिता भीताः केचित्प्रविविशुर्बिलम् । मरणाभिमुखं कान्तं दृष्ट्वा सा सुरसा सती ॥१५॥
नागिनीभिः सह प्रेम्णा रुरोद पुरतो हरेः । पुटाञ्जलियुता तूर्णं प्रणम्य श्रीहरिं भिया ॥
धृत्वा पादारविन्दे च तमुवाच भियाऽऽकुला ॥१६॥
सुरसोवाच ॥
हे जगत्कान्त मे कान्तं देहि मानं च मानद । पतिः प्राणाधिकः स्त्रीणां नास्ति बन्धुश्च तत्परः ॥१७॥
सकलभुवननाथ प्राणनाथं मदीयं न कुरु वधमनन्त प्रेमसिन्धो सुबन्धो ।
अखिलभुवनबन्धो राधिकाप्रेमसिन्धो पतिमिह कुरु दानं मे विधातुर्विधातः ॥१८॥
त्रिनयनविधिशेषाः षण्मुखश्चास्यसङ्घैः स्तवनविषयजाड्यात्स्तोतुमीशान वाणी ।
खलु निखिलवेदाःस्तोतुमन्येऽपि देवाः स्तवनविषयशक्ताः सन्ति सन्तस्तवैव ॥१९॥
कुमतिरहमधिज्ञा योषितां क्वाधमा वा क्व भुवनगतिरीशश्चक्षुषोऽगोचराऽपि ।
विधिहरिहरशेषैः स्तूयमानश्च यस्त्वमतनुमनुजमीशं स्तोतुमिच्छामि तं त्वाम् ॥२०॥
स्तवनविषयभीता पार्वती कस्य पद्मा श्रुतिगणजनयित्री स्तोतुमीशा न यं त्वाम् ।
कलिकलुषनिमग्ना वेदवेदाङ्गशास्त्र श्रवणविषयमूढा स्तोतुमिच्छामि किं त्वाम् ॥२१॥
शयानो रत्नपर्यङ्के रत्नभूषणभूषितः । रत्नभूषणभूषाङ्गो राधावक्षसि संस्थितः ॥२२॥
चन्दनोक्षितसर्वाङ्गः स्मेराननसरोरुहः । प्रोद्यत्प्रेमरसाम्भोधौ निमग्नः सततं सुखात् ॥२३॥
मल्लिकामालतीमालाजालैः शोभितशेखरः । पारिजातप्रसूनानां गन्धामोदितमानसः ॥२४॥
पुंस्कोकिलकलध्वानैर्भ्रमरध्वनिसंयुतैः । कुसुमेषु विकारेण पुलकाङ्कितविग्रहः ॥२५॥
प्रियाप्रदत्तताम्बूलं भुक्तवान्यः सदा मुदा । वेदा अशक्ता यं स्तोतुं जडीभूता विचक्षणाः ॥२६॥
तमनिर्वचनीयं च किं स्तौमि नागवल्लभा । वन्देऽहं त्वत्पदाम्भोजं ब्रह्मेशशेषसेवितम् ॥२७॥
लक्ष्मीसरस्वतीदुर्गा जाह्नवी वेदमातृभिः । सेवितं सिद्धसङ्घैश्च मुनीन्द्रैर्मनुभिः सदा ॥२८॥
निष्कारणायाखिलकारणाय सर्वेश्वरायापि परात्पराय । स्वयंप्रकाशाय परावराय परावराणामधिपाय ते नमः ॥२९॥
हे कृष्ण हे कृष्ण सुरासुरेश ब्रह्मेश शेषेश प्रजापतीश । मुनीश मन्वीश चराचरेश सिद्धीश सिद्धेश गणेश पाहि ॥३०॥
धर्मेश धर्मीश शुभाशुभेश वेदेश वेदेष्वनिरूपितश्च । सर्वेश सर्वात्मक सर्वबन्धो जीवीश जीवेश्वर पाहि मत्प्रभुम् ॥३१॥
इत्येवं स्तवनं कृत्वा भक्तिनम्रात्मकन्धरा । विधृत्य चरणाम्भोजं तस्थौ नागेश्वल्लभा ॥३२॥
नागपत्नीकृतं स्तोत्रं त्रिसन्ध्यं यः पठेन्नरः । सर्वपापात्प्रमुक्तस्तु यात्यन्ते श्रीहरेः पदम् ॥३३॥
इह लोके हरेर्भक्तिमन्ते दास्यं लभेद्ध्रुवम् । लभते पार्षदो भूत्वा सालोक्यादिचतुष्टयम् ॥३४॥
नारद उवाच ॥
नागपत्नीवचः श्रुत्वा भगवान्सर्वनन्दनः । प्रहृष्टोत्फुल्लनयनः किमुवाच हरिः स्वयम् ॥३५॥
कथयस्व महाभाग रहस्यं परमाद्भुतम् ।
सूत उवाच ॥
नारदस्य वचः श्रुत्वा भगवान्सर्वदर्शनः ॥३६॥
उवाच परमात्मानं मधुवृन्दं पदेपदे ।
नारायण उवाच ॥
नागपत्नीवचः श्रुत्वा श्रीकृष्णस्तमुवाच ह ॥३७॥
पुटाञ्जलियुतां पादे पतितां भयविह्वलाम् ।
श्रीकृष्ण उवाच ॥
उत्तिष्ठोत्तिष्ठ नागेशे वरं वृणु भयं त्यज ॥३८॥
गृहाण कान्तं हे मातर्मद्वरादजरामरम् । कालिन्दीह्रदमुत्सृज्य स्वकीयं भवनं व्रज ॥३९॥
भर्ता सगोष्ठ्या सार्द्धं च गच्छ वत्से सुखी भव । अद्य प्रभृति नागेशि भूता कन्या च त्वं मम ॥४०॥

त्वत्प्राणाधिक एवायं जामाता च न संशयः । मत्पादपद्मचिह्नेन गरुडस्त्वत्पतिं शुभे ॥४१॥
कृत्वा च स्तवनं भक्त्या प्रणमिष्यति मत्पदम् । त्यज त्वं गरुडाद्भीतिं शीघ्रं रमणकं व्रज ॥४२॥
ह्रदान्निर्गच्छ वत्से त्वं वरं वृणु यथेप्सितम् । श्रीकृष्णस्य वचः श्रुत्वा प्रसन्नवदनेक्षणा ॥४३॥
उवाच साश्रुनेत्रा सा भक्तिनम्रात्मकन्धरा ।
सुरसोवाच ॥
वरं दास्यसि चेदानीं वरदेश्वर मेऽपि च ॥४४॥
त्वत्पादाब्जे दृढां भक्तिं निश्चलां दातुमर्हसि । मन्मनस्त्वत्पदाम्भोजे भ्रमतु भ्रमरो यथा ॥४५॥
तव स्मृतर्विस्मृतिर्न कदाऽपि न भविष्यति । स्वकान्ते मम सौभाग्यं कान्तोऽयं ज्ञानिनां वरः ॥४६॥
इत्येवं प्रार्थनीयं च परिपूर्णं कुरु प्रभो । इत्येवमुक्त्वा सर्पस्त्री प्रतस्थौ पुरतो हरेः ॥४७॥
शरत्पार्वणचन्द्रास्यं ददर्श श्रीहरेर्मुखम् । लोचनाभ्यां पपौ वक्त्रं निमेषरहितं सती ॥४८॥
सर्वाङ्गपुलकोद्भिन्ना सानन्दाश्रुपरिप्लुता । सुन्दरं बालकं दृष्ट्वा पुत्रस्नेहं प्रकुर्वती ॥४९॥
उवाच पुनरेवेदं भक्त्युद्रेकपरिप्लुता । न यास्यामि रमणकं तत्र नास्ति प्रयोजनम् ॥५०॥
सर्पः करोतु संसारं कुरु मां निजकिङ्करीम् । न वाञ्छा मम हे कृष्ण सालोक्यादिचतुष्टये ॥५१॥
त्वत्पदाम्भोजसेवायाः कलां नार्हन्ति षोडशीम् । विना त्वत्पादसेवां च यो वाञ्छति वरान्तरम् ॥५२॥
भारते दुर्लभं जन्म लब्ध्वाऽसौ वञ्चितः स्वयम् । नागपत्न्या वचः श्रुत्वा स्मेराननसरोरुहः ॥५३॥
प्रसन्नमानसः श्रीमानोमित्येवमुवाच ह । एतस्मिन्नन्तरे दिव्यः सद्रत्नसारनिर्मितः ॥५४॥
आजगाम रथस्तूर्णमुद्दीप्तस्तेजसा मुने । पार्षदप्रवरैर्युक्तो वस्त्रमालापरिच्छदः ॥५५॥
शतचक्रो वायुवेगो मनोयायी मनोहरः । अवरुह्य रथात्तूर्णं श्यामलाः श्याम किङ्कराः ॥५६॥
प्रणम्य कृष्णं तां नीत्वा जग्मुर्गोलोकमुत्तमम् । हरिश्छायां विनिर्माय ददौ सर्पाय तेजसा ॥५७॥
स च किञ्चिन्न बुबुधे मोहितो विष्णुमायया । अवरुह्य सर्पमूर्ध्नः श्रीकृष्णः करुणानिधिः ॥५८॥
ददौ हस्तं च कृपया शीघ्रं कालियमस्तके । संप्राप्य चेतनां सद्यो ददर्श पुरतो हरिम् ॥५९॥
पुटाञ्जलियुतां साश्रुपूर्णां च सुरसां सतीम् । प्रणनाम हरिं सद्यो रुरोद प्रेमविह्वलः ॥६०॥
भक्त्युद्रेकात्साश्रुनेत्रां पुलकाङ्कितविग्रहाम् । तूर्ष्णींभूतां च तां दृष्ट्वा समुवाच कृपानिधिः ॥
यदीश्वरस्य सततं योग्यायोग्ये समा कृपा ॥६१॥
श्रीकृष्ण उवाच ॥
वरं वृणु त्वं कालीय यस्ते मनसि वर्तते ॥६२॥
त्वं मे प्राणाधिको वत्स सुखं तिष्ठ भयं त्यज । तस्याह्यनुगृह्णाणि योऽतिभक्तो ममांशजः ॥६३॥
किञ्चित्तद्दमनं कृत्वा त्वत्प्रसादं करोम्यहम् । त्वद्वंशजातान्सर्पांश्च हन्ति यो मानवाधमः ॥६४॥
ब्रह्महत्यासमं पापं भविता तस्य निश्चितम् । मत्पादपद्मचिह्ने यः करोति दण्डताडनम् ॥५५॥
द्विगुणं ब्रह्महत्याया भविता तस्य किल्बिषम् । लक्ष्मीर्यास्यति तद्गेहाच्छापं दत्त्वा सुदारुणम् ॥५६॥
वंशायुर्यशसा हानिर्भविता तस्य निश्चितम् । ध्रुवं वर्षशतं कालसूत्रे यास्यति मद्गिरा ॥५७॥
त्वत्प्रमाणाः कीटसङ्घा दंशिष्यन्ति च संततम् । भोगान्ते जन्म लब्ध्वा च तन्मृत्युस्तस्य दंशनात् ॥५८॥
तस्य वंशोद्भवानां च त्वद्वंशाद्भविता भयम् । ये च त्वद्वंशजान्दृष्ट्वा सुपदाङ्कं मदीयकम् ॥५९॥
प्रणमिष्यन्ति भक्त्या ते मुच्यन्ते सर्वपातकात् । गच्छ शीघ्रं रमणकं त्यज भीतिं खगाधिपात् ॥६०॥
मत्पदाङ्कं मूर्ध्नि दृष्ट्वा त्वां भक्त्या प्रणमिष्यति । तव त्वद्वंशजानां च गरुडानन भयं क्वचित् ॥६१॥
सर्वेषां ज्ञातिसर्पाणां वरोऽद्य भव मद्वरात् । वरं किं परमं वत्स वाञ्छितं वरयाधुना ॥६२॥
भयं त्यक्त्वा कथय मां त्वदीयं दुःखभञ्जनम् । श्रीकृष्णवचनं श्रुत्वा कालियः कम्पितो भिया ॥
पुटाञ्जलियुतो भूत्वा तमुवाच भुजङ्गमः ॥७३॥
कालिय उवाच ॥
वरेऽन्यस्मिन्मम विभो वाञ्छा नास्ति वरप्रद ॥७४॥
भक्तिं स्मृतिं त्वत्पदाब्जे देहि जन्मनि जन्मनि । जन्म ब्रह्मकुले वाऽपि तिर्यग्योनिषु वा समम् ॥७५॥
तद्भवेत्सफलं यत्र स्मृतिस्त्वच्चरणाम्बुजे । तन्निष्फलः स्वर्गवासो नास्ति चेत्त्वत्पदस्मृतिः ॥७६॥
त्वत्पादध्यानयुक्तस्य यत्तत्स्थानं च तत्परम् । क्षणं वा कोटिकल्पं वा पुरुषायुः क्षयोऽस्तु वा ॥७७॥
यदि त्वत्सेवया याति सफलो निष्कलोऽथवा । तेषां चायुर्व्ययो नास्ति ये त्वत्पादाब्जसेवकाः ॥७८॥
न सन्ति जन्ममरणरोगशोकार्तिभीतयः । इन्द्रत्वे वाऽमरत्वे वा ब्रह्मत्वे चातिदुर्लभे ॥७९॥
वाञ्छा नास्त्येव भक्तानां त्वत्पादसेवनं विना । सुजीर्णपटखण्डस्य समं नूतनमेव च ॥८०॥
पश्यन्ति भक्ताः किं चान्यत्सालोक्यादिचतुष्टयम् । संप्राप्तस्त्वन्मनुर्ब्रह्मन्ननन्ताद्यावदेव हि ॥८१॥
तावत्त्वद्भावनेनैव त्वद्वर्णोऽहमनुग्रहात् । मां च भक्तमपक्वं वा विज्ञाय गरुडः स्वयम् ॥८२॥

देशाद्दूरं च न्यक्कारं चकार दृढभक्तिमान् । भवता च दृढां भक्तिं दत्त्वा मे वरदेश्वर ॥८३॥
स च उक्तश्च भक्तोऽहं न मां त्यक्तुं क्षमोऽधुना । त्वत्पादपद्मचिह्नाक्तं दृष्ट्वा श्रीमस्तकं मम ॥८४॥
सदोषं गुणयुक्तं मां सोऽधुना त्यक्तुमक्षमः । ममाराध्याश्च नागेन्द्रा न तद्वध्योऽहमीश्वर ॥८५॥
भयं न केभ्यः सर्वत्र तमनन्तं गुरुं विना । यं देवेन्द्राश्च देवाश्च मुनयो मनवो नराः ॥८६॥
स्वप्ने ध्यानेन पश्यन्ति चक्षुषोर्गोचरः स मे । भक्तानुरोधात्साकारः कुतस्ते विग्रहो विभो ॥८७॥
सगुणत्वं च साकारो निराकारश्च निर्गुणः । स्वेच्छामयः सर्वधाम सर्वबीजं सनातनम् ॥८८॥
सर्वेषामीश्वरः साक्षी सर्वात्मा सर्वरूपधृक् । ब्रह्मेशशेषधर्मेन्द्रा वेदवेदाङ्गपारगाः ॥८९॥
स्तोतुं यमीशं ते जाड्याः सर्पः स्तोष्यति तं विभुम् । हे नाथ करुणासिन्धो दीनबन्धो क्षमाधमम् ॥९०॥
खलस्वभावादज्ञानात्कृष्ण त्वं चर्वितो मया । नास्त्रलक्ष्यो यथाकाशो न दृश्यान्तो न लङ्घकः ॥९१॥
न स्पृश्यो हि न चावर्यस्तथा तेजस्त्वमेव च । इत्येवमुक्त्वा नागेन्द्रः पपात चरणाम्बुजे ॥९२॥
ओमित्युक्त्वा हरिस्तुष्टः सर्वं तस्मै वरं ददौ । नागराजकृतं स्तोत्रं प्रातरुत्थाय यः पठेत् ॥९३॥
तद्वंश्यानां च तस्यैव नागेभ्यो न भयं भवेत् । स नागशय्यां कृत्वैव स्वप्तुं शक्तः सदा भुवि ॥९४॥
विषपीयूषयोर्भेदो नास्त्येव तस्य भक्षणे । नागग्रस्ते नागघाते प्राणान्ते विषभोजनात् ॥९५॥
स्तोत्रस्मरणमात्रेण सुस्थो भवति मानवः । भूर्जे कृत्वा स्तोत्रमिदं कण्ठे वा दक्षिणे करे ॥९६॥
बिभर्ति यो भक्तियुक्तो नागेभ्योऽपि न तद्भयम् । यत्र गेहे स्तोत्रमिदं नागस्तत्र न तिष्ठति ॥९७॥
विषाग्निवज्रभीतिश्च न भवेत्तत्र निश्चितम् । इह लोके हरेर्भक्तिं स्मृतिं च सततं लभेत् ॥
अन्ते च स्वकुलं पूत्वा दास्यं च लभते ध्रुवम् ॥९८॥
श्रीनारायण उवाच ॥
नागेन्द्राय वरं दत्त्वा पुनस्तं जगदीश्वरः । उवाच मधुरं वाक्यं परिणामसुखावहम् ॥९९॥
श्रीकृष्ण उवाच ॥
गच्छ त्वं च रमणकं यथेन्द्रनगरं परम् ॥१००॥
सार्द्धं स्वगोष्ठ्या नागेन्द्र यमुनाजलवर्त्मना । श्रुत्वा नागो हरेराज्ञां रुरोद प्रेमविह्वलः ॥१०१॥
कदा द्रक्ष्यामि त्वत्पादपद्मं नाथेत्युवाच ह । प्रणम्य शतकृत्वश्च स्त्रिया गोष्ठ्या सहेश्वरम् ॥१०२॥
जगाम जलमार्गेण नागेन्द्रो विरहातुरः । यमुना ह्रतोयं च बभूवामृतकल्पकम् ॥१०३॥
प्रसन्ना जन्तवः सर्वे बभूवुस्तेन नारद । गत्वा ददर्श भवनं यथेन्द्रनगरं परम् ॥१०४॥
आज्ञया च कृपासिन्धोर्निर्मितं विश्वकर्मणा । तत्र तस्थौ च नागेन्द्रः स्त्रिया पुत्रगणैः सह ॥१०५॥
निःशङ्को हर्षयुक्तश्च हरिभावन तत्परः । इत्येवं कथितं सर्वं हरेश्चरितमद्भुतम् ॥
सुखदं मोक्षदं सारं परं किं श्रोतुमिच्छसि ॥१०६॥
सूत उवाच ॥
महर्षेर्वचनं श्रुत्वा नारदो हर्षविह्वलः । ऋषिं पप्रच्छ संदेहं सर्वसंदेहभञ्जनम् ॥१०७॥
नारद उवाच ॥
कथं विहाय कालीयः स्वपूर्वभवनं परम् । जगाम यमुनातीरं तन्मे ब्रूहि जगद्गुरो ॥१०८॥
श्रीनारायण उवाच ॥
शृणु नारद वक्ष्येऽहमितिहासं पुरातनम् ॥१०९॥
यच्छ्रुतं धर्मवक्त्रान्मे मलये सूर्यपर्वणि । कृष्णाख्यानप्रसङ्गेन सुप्रभा पश्चिमे तटे ॥११०॥
पप्रच्छ धर्मं पुलहः कथितं मुनिसंसदि । इदमाख्यानमाश्चर्यमुवाच तं कृपानिधिः ॥१११॥
तत्र श्रुतं मया विप्र निबोध कथयामि ते । शेषाज्ञया नागगणा प्रतिसंवत्सरं भिया ॥११२॥
कार्तिकीपूर्णिमायां तु कुर्वन्ति गरुडार्चनम् । पुष्पैर्धूपैश्च दीपैश्च नैवेद्यैर्बलिभिर्मुदा ॥११३॥
पुष्करे च महातीर्थे सुस्नाता भक्तिसंयुताः । तस्य पूजां च कालीयो न चकारात्यहङ्कृतः ॥११४॥
नागपूजोपकरणं बलाद्भक्षितुमुद्यतः । चक्रुर्निवारणं नागा नीतिमूचुर्मदोद्धतम् ॥११५॥
न शक्ता वारणे ते चेत्याविर्भूतः खगेश्वरः । दृष्ट्वा खगेश्वरं नागाः कालीयप्राणरक्षया ॥११६॥
प्राणशक्त्या च युयुधुर्यावत्सूर्योदयं मुने । पक्षीन्द्रतेजसा सर्वे समुद्विग्नाः पलायिताः ॥११७॥
अनन्तं शरणं जग्मुः सर्वेषामभयप्रदम् । पलायनपरान्दृष्ट्वा नागांश्च करुणानिधिः ॥११८॥
तत्र तस्थौ च निःशङ्कः कालीयस्तं ददर्श ह । स्मृत्वा हरिपदाम्भोजं कालीयो युयुधे मुने ॥११९॥
मुहूर्तं च तयोर्युद्धं बभूवातीव दारुणम् । पराजितश्च नागेन्द्रस्तेजसा गरुडस्य च ॥१२०॥
भिया पलायनं कृत्वा जगाम यमुना ह्रदम् । न तं सौभरिशापेन खगेन्द्रो गन्तुमीश्वरः ॥
तत्र तस्थौ भिया नागो जग्मुः पश्चाच्च तद्गणाः ॥१२१॥
नारद उवाच ॥

कथं तु सौभरेः शापो बभूव गरुडाय वै । कथं न शक्तो गन्तुं तं ह्रदमीश्वरवाहनः ॥१२२॥
श्रीनारायण उवाच ॥
दिव्यं वर्षसहस्रं च वर्षाणां तत्र सौभरिः ॥१२३॥
तपस्तप्त्वा महासिद्धो दध्यौ कृष्णपदाम्बुजम् । समीपे ध्यायमानस्य कूले च यमुना जले ॥१२४॥
गणेन सार्धं निःशङ्कः करोति भ्रमणं मुदा । पुच्छमुत्फाल्य बहुधा परितः परमेच्छया ॥१२५॥
मुनिं प्रदक्षिणी कृत्य यात्यायाति मुदाऽन्वितः । सकुलं सुमहात्मानं दर्शंदर्शं खगाधिपः ॥१२६॥
जग्राह चञ्चुना मीनं मुनीन्द्रस्य समीपतः । गच्छन्तं तं मीनमुखं ददर्श कोपचक्षुषा ॥१२७॥
प्रकोपितो मुनेर्दृष्ट्या मीनस्तोये पपात ह । तमुवाच मुनीन्द्रश्च पुनरादातुमुद्यतम् ॥
मीनश्च गरुडत्रासात्तस्थौ मुनिसमीपतः ॥१२८॥
सौभरिरुवाच ॥
गच्छ दूरं गच्छ दूरं खगेन्द्र मत्समीपतः ॥१२९॥
का योग्यता मत्पुरस्ते ग्रहीतुं जीवमुल्बणम् । श्रीकृष्णवाहनं ज्ञात्वा चात्मानं बहु मन्यसे ॥१३०॥
त्वद्विधान्कोटिशः कृष्णः स्रष्टुं शक्तश्च वाहकान् । करोमि भस्मसात्तूर्णं त्वां च भ्रूभङ्गलीलया ॥१३१॥
वाहनं च त्वमीशस्य न वयं तव किङ्कराः । अद्य प्रभृति पक्षीन्द्र यद्यागच्छसि मे ह्रदम् ॥१३२॥
मदीयशापात्तूर्णं च भस्मसाद्भविता ध्रुवम् । मुनीन्द्रस्य वचः श्रुत्वा प्रचचाल खगेश्वरः ॥१३३॥
स्मारंस्मारं कृष्णपादं तं प्रणम्य जगाम ह । अद्यप्रभृति विप्रेन्द्र पतगेन्द्रस्य संततम् ॥१३४॥
ह्रदस्य श्रुतिमात्रेण कम्पो भवति निश्चितम् । इतिहासश्च कथितो यः श्रुतो धर्मवक्त्रतः ॥१३५॥
सरहस्यं श्रुतिसुखं प्रकृतं शृणु मङ्गलम् । विज्ञाय सुचिरं बाला नोत्तस्थौ तज्जलाद्धरिः ॥१३६॥
चक्रुर्विषादं मोहाच्च रुरुदुर्यमुनातटे । स्ववक्षोघातनं चक्रुः केचिद्बालाः शुचाऽऽकुलाः ॥१३७॥
केचिन्निपत्य भूमौ च मूर्च्छां प्रापुर्हरिं विना । ह्रदं प्रवेष्टुं केचिच्च विरहेण समन्विताः ॥१३८॥
केचिद्गोपालबालाश्च चक्रुश्च तन्निवारणम् । कृत्वा विलापं केचिच्च प्राणांस्त्यक्तुं समुद्यताः ॥१३९॥
तेषां केचिज्ज्ञानवन्तो रक्षां चक्रुः प्रयत्नतः । केचिदूचुश्च हाहेति कृष्ण कृष्णेति केचन ॥१४०॥
केचिद्वक्तुं प्रवृत्तिं च प्रययुर्नन्दसन्निधिम् । केचित्संमीलितास्तत्र शोकमोहभयातुराः ॥१४१॥
इत्यूचुः किं करिष्यामः कुतोऽस्माकं गतो हरिः । हे नन्दसूनो हे कृष्ण प्राणेभ्योऽप्यधिकप्रिय ॥१४२॥
हे बन्धो दर्शनं देहीत्यूचुः प्राणाः प्रयान्ति हि । एतस्मिन्नन्तरे केचिद् बालका नन्दसन्निधिम् ॥१४३॥
संप्रापुरतिलोलाश्च रुदन्तः शोकविह्वलाः । प्रवृत्तिमूचुस्तं शीघ्रं यशोदां मूलतो बलम् ॥१४४॥
गोपान्गोपालिकाश्चैव रक्तपङ्कजलोचनाः । श्रुत्वा वार्तां च ते सर्वे शीघ्रं जग्मुः शुचाऽन्विताः ॥१४५॥
कलिन्दनन्दिनीतीरं रुरुदुर्बालकैर्युताः । गत्वा संमीलिताः सर्वे रुरुदुः शोकमूर्च्छिताः ॥१४६॥
ह्रदं विशन्तीमम्बां तां केचिच्चक्रुर्निवारणम् । गोपा गोपालिकाश्चैव जघ्नुरङ्गानि शोकतः ॥१४७॥
केचिद्विललपुस्तत्र मूर्च्छां प्रापुश्च केचन । ह्रदं विशन्तीं तां राधां वारयामास काचन ॥१४८॥
मूर्च्छां च प्राप सा शोकान्मृतेव च सरित्तटे । विलप्यातिभृशं नन्दो मूर्च्छां प्राप पुनः पुनः ॥१४९॥
भूयोऽपि रोदनं कृत्वा भूयो मूर्च्छामवाप ह । विलपन्तं भृशं नन्दं यशोदां शोककर्शिताम् ॥१५०॥
गोपाश्च गोपिकाश्चैव राधिकामतिमूर्च्छिताम् । रुदतो बालकान्सर्वान्बालिकाश्च शुचाऽन्विताः ।
सर्वांश्च बोधयामास बलश्च ज्ञानिनां वरः ॥१५१॥
श्रीबलदेव उवाच ॥
गोपा गोपालिका बालाः सर्वे शृणुत मद्वचः ॥१५२॥
हे नन्द ज्ञानिनां श्रेष्ठ गर्गवाक्यस्मृतिं कुरु । जगद्बिभर्तुः शेषस्य संहर्तुः शङ्करस्य च ॥१५३॥
विधातुः संविधातुश्च भुवि कस्मात्पराजयः । परमाणुः परो व्यूहः स्थूलात्स्थूलः परात्परः ॥१५४॥
विद्यमानोऽप्यविदृश्यः संयोगो योगिनामपि । दिशां नास्ति समाहारः स्पृश्यो नाकाश एव च ॥१५५॥
अपि सर्वेश्वरो बाध्य इत्यूचुः श्रुतयः स्फुटम् । नात्मा दृश्यो नास्त्रलक्ष्यो न वध्यो न हि दृश्यकः ॥१५६॥
नागिनग्रस्तो न हिंस्यश्चापीदमाध्यात्मिका विदुः । विग्रहोऽस्यैव कृष्णस्य भक्तध्यानार्थमेव च ॥१५७॥
ज्योतिःस्वरूपस्य विभोर्नाद्यन्तमध्यमात्मनः । जलप्लुते च ब्रह्माण्डे जलशायी जनार्दनः ॥१५८॥
यन्नाभिपद्मजो ब्रह्मा तस्येशस्य ह्रदे विपत् । मशकश्चेत्क्षमो ग्रस्तुं ब्रह्माण्डमखिलं पितः ॥१५९॥
न तथाऽपि तदीशं तं ग्रस्तुं सर्पः क्षमो भवेत् । इत्येवं कथितं सर्वमाध्यात्मिकमनुत्तमम् ॥१६०॥
निगूढं योगिनां सारं संशयच्छेदकारणम् । बलदेववचः श्रुत्वा गर्गवाक्यमनुस्मरन् ॥१६१॥
तत्याज शोकं नन्दश्च व्रजश्च व्रजयोषितः । प्रबोधं मेनिरे सर्वे न यशोदा न राधिका ॥१६२॥
बन्धुविच्छेदविषये प्रबोधे न स्थितं मनः । एतस्मिन्नन्तरे कृष्णमुत्पतन्तं जलान्मुने ॥१६३॥
ददृशुस्तं सुप्रसन्ना व्रजाश्च व्रजयोषितः । शरत्पार्वणचन्द्रास्यं सस्मितं सुमनोहरम् ॥१६४॥

अस्निग्धवस्त्रमस्निग्धमलुप्तचन्दनाञ्जनम् । सर्वाभरणसंयुक्तं ज्वलन्तं ब्रह्मतेजसा ॥१६५॥
मयूरपिच्छचूडं च वंशीवदनमच्युतम् । यशोदा बालकं दृष्ट्वा कृत्वा वक्षसि सस्मिता ॥१६६॥
चुचुम्ब वदनाम्भोजं प्रसन्नवदनेक्षणा । क्रोडे चकार नन्दश्च बलश्च रोहिणी मुदा ॥१६७॥
निमेषरहिताः सर्वे ददृशुः श्रीमुखं हरेः । प्रेमान्धा बालकाः सर्वे चक्रुरालिङ्गनं हरेः ॥१६८॥
पपुश्चक्षुश्चकोरैश्च मुखचन्द्रं च गोपिकाः । एतस्मिन्नन्तरे तत्र सहसा काननान्तरम् ॥१६९॥
दावाग्निर्वेष्टयामास तैः सर्वैः सह गोकुलम् । दृष्ट्वा शैलप्रमाणागिनं परितः काननान्तरे ॥१७०॥
प्रणाशं मेनिरे सर्वे भयमापुश्च सङ्कटे । श्रीकृष्णं तुष्टुवुः सर्वे संपुटाञ्जलयो व्रजाः ॥
बाला गोप्यश्च संत्रस्ता भक्तिनम्रात्मकन्धराः ॥१७१॥
बाला ऊचुः ॥
यथा संरक्षितं ब्रह्मन्सर्वापत्स्वेव नः कुलम् ॥१७२॥
तथा रक्षां कुरु पुनर्दावाग्नेर्मधुसूदन । त्वमिष्टदेवताऽस्माकं त्वमेव कुलदेवता ॥१७३॥
स्रष्टा पाता च संहर्ता जगतां च जगत्पते । वह्निर्वा वरुणो वाऽपि चन्द्रो वा सूर्य एव च ॥१७४॥
यमः कुबेरः पवन ईशानाद्याश्च देवताः । ब्रह्मेशशेषधर्मेन्द्रा मुनीन्द्रा मनवः स्मृताः ॥१७५॥
मानवाश्च तथा दैत्या यक्षराक्षसकिंनराः । ये ये चराचराश्चैव सर्वे तव विभूतयः ॥१७६॥
आविर्भावस्तिरोभावः सर्वेषां च तथेच्छया । अभयं देहि गोविन्द वह्निसंहरणं कुरु ॥१७७॥
वयं त्वां शरणं यामो रक्ष नः शरणागतान् । इत्येवमुक्त्वा ते सर्वे तस्थुर्ध्यात्वा पदाम्बुजम् ॥१७८॥
दूरीभूतस्तु दावाग्निः श्रीकृष्णामृतदृष्टितः । दूरीभूते च दावाग्नौ ननृतुस्ते मुदाऽन्विताः ॥१७९॥
सर्वापदः प्रणश्यन्ति हरिस्मरणमात्रतः । इदं स्तोत्रं महापुण्यं प्रातरुत्थाय यः पठेत् ॥१८०॥
वह्नितो न भवेत्तस्य भयं जन्मनि जन्मनि । शत्रुग्रस्ते च दावाग्नौ विपत्तौ प्राणसङ्कटे ॥१८१॥
स्तोत्रमेतत्पठित्वा तु मुच्यते नात्र संशयः । शत्रुसैन्यं क्षयं याति सर्वत्र विजयी भवेत् ॥
इह लोके हरेर्भक्तिमन्ते दास्यं लभेद्ध्रुवम् ॥१८२॥
श्रीनारायण उवाच ॥
दावाग्निमोक्षणं कृत्वा तैः सार्द्धं शृणु नारद । जगाम श्रीहरिर्गेहं कुबेरभवनोपमम् ॥१८३॥
ब्राह्मणेभ्यो धनं नन्दः परिपूर्णं ददौ मुदा । भोजनं कारयामास ज्ञातिवर्गांश्च बान्धवान् ॥१८४॥
नानाविधं मङ्गलं च हरेर्नामानुकीर्तनम् । वेदांश्च पाठयामास विप्रद्वारा मुदाऽन्वितः ॥१८५॥
एवं मुमुदिरे सर्वे वृन्दारण्ये गृहेगृहे । श्रीकृष्णचरणाम्भोजध्यानैकतानमानसाः ॥१८६॥
इत्येवं कथितं सर्वं हरेश्चरितमङ्गलम् । कलिकिल्बिषकाष्ठानां दहने दहनोपमम् ॥१८७॥
इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्म खण्डे नारायणनारदसंवादे कालीयदमनदावाग्निमोक्षणं नामैकोनविंशोऽध्यायः ॥१९॥
आदितः श्लोकानां समष्टयङ्काः-१२,०४२+१८७=१२,२२९



## ॥ अथ विंशोऽध्यायः ॥

श्रीनारायण उवाच ॥
एकदा बालकैः सार्द्धं बलेन सह माधवः । भुक्त्वा पीत्वाऽनुलिप्तश्च वृन्दारण्यं जगाम ह ॥१॥
क्रीडां चकार भगवान्कौतुकेन च तैः सह । क्रीडानि मग्नचित्तानां दूरं तद्गोकुलं ययौ ॥२॥
तस्य प्रभावं विज्ञातुं विधाता जगतां पतिः । चकार निह्नुतिं गाश्च वत्सांश्च बालकानपि ॥३॥
विज्ञाय तदभिप्रायं सर्वज्ञः सर्वकारकः । पुनश्चकार तत्सर्वं योगीन्द्रो योगमायया ॥४॥
जगाम श्रीहरिर्गेहं कालयित्वा च गोकुलम् । बलेन बालकैः सार्धं क्रीडाकौतुकमानसः ॥५॥
एवं चकार भगवान्वर्षमेकं च प्रत्यहम् । यमुनागमनं गोभिर्बलेन सह बालकैः ॥६॥
ब्रह्मा प्रभावं विज्ञाय लज्जानम्रात्मकन्धरः । आजगाम हरेःस्थानं भाण्डीरवटमूलके ॥७॥
ददर्श कृष्णं तत्रैव गोपालगणवेष्टितम् । यथा पार्वणचन्द्रं च विभान्तं स्वगणैः सह ॥८॥
रत्नसिंहासनस्थं च हसन्तं सस्मितं मुदा । पीतवस्त्रपरीधानं ज्वलन्तं ब्रह्मतेजसा ॥९॥
रत्नकेयूरवलयरत्नमञ्जीररञ्जितम् । रत्नकुण्डलयुग्माभ्यां स्वकपोलस्थलोज्ज्वलम् ॥१०॥
कोटिकन्दर्पलावण्यं लीलाधाममनोहरम् । चन्दनागुरुकस्तूरीकुङ्कुमार्चितविग्रहम् ॥११॥
पारिजातप्रसूनानां मालाजालैर्विभूषितम् । नवीननीरदश्यामं प्रोद्भिन्ननवयौवनम् ॥१२॥
मालतीमाल्यसंयुक्तं मयूरपिच्छचूडकम् । स्वाङ्गसौन्दर्यदीप्त्या च कृतभूषणभूषितम् ॥१३॥
शरत्पार्वणचन्द्रस्य प्रभामुष्टास्यसुन्दरम् । पक्वबिम्बाधरौष्ठं च खगेन्द्रचञ्चुनासिकम् ॥१४॥
शरन्मध्याह्नपद्मानां प्रभामोचनलोचनम् । मुक्तापङ्क्तिविनिन्द्यैकदन्तपङ्क्तिमनोहरम् ॥१५॥

कौस्तुभेन मणीन्द्रेण वक्षःस्थलसमुज्ज्वलम् । शान्तं च राधिकाकान्तं परिपूर्णतमं परम् ॥१६॥
एवंभूतं प्रभुं दृष्ट्वा प्रणनामातिविस्मितः । दर्शं दर्शमीश्वरं तं प्रणनाम पुनःपुनः ॥१७॥
यद्दृष्टं हृदयाम्भोजे तद्रूपं बहिरेव च । या मूर्तिः पुरतो दृष्टा सा पश्चात्परितस्ततः ॥१८॥
तत्र वृन्दावने सर्वं दृष्ट्वा कृष्णसमं मुने । ध्यायंध्यायं च तद्रूपं तत्र तस्थौ जगद्गुरुः ॥१९॥
गावो वत्साश्च बालाश्च लतागुल्माश्च वीरुधः । सर्वं वृन्दावनं ब्रह्मा श्यामरूपं ददर्श ह ॥२०॥
दृष्ट्वैवं परमाश्चर्यं पुनर्ध्यानं चकार ह । ददर्श त्रिजगद्ब्रह्मा नान्यत्कृष्णं विना मुने ॥२१॥
क्व च वृक्षः क्व वा शैलः क्व मही क्व च सागराः । क्व देवाः क्व च गन्धर्वा मुनीन्द्राः क्व च मानवाः ॥२२॥
क्व चात्मा क्व जगद्बीजं क्व स्वर्गः क्वायमेव च । सर्वं च स्वदृशा ब्रह्मा ददर्श मायया हरेः ॥२३॥
क्व कृष्णो जगतां नाथः क्व वा मायाविभूतयः । सर्वं कृष्णमयं दृष्ट्वा किञ्चिन्निर्वक्तुमक्षमः ॥२४॥
किं स्तौमि किं करोमीति मनसैवं प्रगृह्य च । तत्र स्थित्वा जगद्धाता जपं कर्तुं समुद्यतः ॥२५॥
सुखं योगासनं कृत्वा बभूव संपुटाञ्जलिः । पुलकाङ्कितसर्वाङ्गः साश्रुनेत्रोऽतिदीनवत् ॥२६॥
इडां सुषुम्नां मध्यां च पिङ्गलां नलिनीं धुराम् । नाडीषट् कं च योगेन निबद्ध्य च प्रयत्नतः ॥२७॥
मूलाधारं स्वाधिष्ठानं मणिपूरं मनोहरम् । विशुद्धं परमाज्ञाख्यं षट्चक्रं च निबद्ध्य च ॥२८॥
लङ्घनं कारयित्वा च तत्षट्चक्रं क्रमाद्विधिः । ब्रह्मरन्ध्रं समानीय वायुबन्धं चकार ह ॥२९॥
निबध्य वायुं मध्यां तामानीय हृदयाम्बुजम् । तं वायुं भ्रामयित्वा च योजयामास मध्यया ॥३०॥
एवं कृत्वा तु निष्पन्दो यो दत्तो हरिणा पुरा । जजाप परमं मन्त्रं तस्यैव च दशाक्षरम् ॥३१॥
मुहूर्तं च जपं कृत्वा ध्यायंध्यायं पदाम्बुजम् । ददर्श हृदयाम्भोजे सर्वतेजोमयं मुने ॥३२॥
तत्तेजसोऽन्तरे रूपमतीव सुमनोहरम् । द्विभुजं मुरलीहस्तं भूषितं पीतवाससा ॥३३॥
श्रुतिमूलस्थलन्यस्तज्वलन्मकरकुण्डलम् । ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकातरम् ॥३४॥
यद्दृष्टं ब्रह्मरन्ध्रे च हृदि तद्बहिरेव च । दृष्ट्वा च परमाश्चर्यं तुष्टाव परमेश्वरम् ॥३५॥
यत्स्तोत्रं च पुरा दत्तं हरिणैकार्णवे मुने । तमीशं तेन विधिना भक्तिनम्रात्मकन्धरः ॥३६॥

ब्रह्मोवाच ॥

सर्वस्वरूपं सर्वेशं सर्वकारणकारणम् । सर्वानिर्वचनीयं तं नमामि शिवरूपिणम् ॥३७॥
नवीनजलदाकारं श्यामसुन्दरविग्रहम् । स्थितं जन्तुषु सर्वेषु निर्लिप्तं साक्षिरूपिणम् ॥३८॥
स्वात्मारामं पूर्णकामं जगद्व्यापिजगत्परम् । सर्वस्वरूपं सर्वेषां बीजरूपं सनातनम् ॥३९॥
सर्वाधारं सर्ववरं सर्वशक्तिसमन्वितम् । सर्वाराध्यं सर्वगुरुं सर्वमङ्गलकारणम् ॥४०॥
सर्वमन्त्रस्वरूपं च सर्वसंपत्करं वरम् । शक्तियुक्तमयुक्तं च स्तौमि स्वेच्छामयं विभुम् ॥४१॥
शक्तीशं शक्तिबीजं च शक्तिरूपधरं वरम् । संसारसागरे घोरे शक्तिनौकासमन्वितम् ॥४२॥
कृपालुं कर्णधारं च नमामि भक्तवत्सलम् । आत्मस्वरूपमेकान्तं लिप्तं निर्लिप्तमेव च ॥४३॥
सगुणं निर्गुणं ब्रह्म स्तौमि स्वेच्छास्वरूपिणम् । सर्वेन्द्रियादिदेवं तमिन्द्रियालयमेव च ॥४४॥
सर्वेन्द्रियस्वरूपं च विराड्रूपं नमाम्यहम् । वेदं च वेदजनकं सर्ववेदाङ्गरूपिणम् ॥४५॥
सर्वमन्तस्वरूपं च नमामि परमेश्वरम् । सारात्सारतरं द्रव्यमपूर्वमनिरूपिणम् ॥४६॥
स्वतन्त्रमस्वतन्त्रं च यशोदानन्दनं भजे । सन्तं सर्वशरीरेषु तमदृष्टमनूहकम् ॥४७॥
ध्यानासाध्यं विद्यमानं योगीन्द्राणां गुरुं भजे । रासमण्डलमध्यस्थं रासोल्लाससमुत्सुकम् ॥४८॥
गोपीभिः सेव्यमानं च तं धरेशं नमाम्यहम् । सतां सदैव सन्तं तमसन्तमसतामपि ॥४९॥
योगीशं योगसाध्यं च नमामि शिवसेवितम् । मन्त्रबीजं मन्त्रराजं मन्त्रदं फलदं फलम् ॥५०॥
मन्त्रसिद्धिस्वरूपं तं नमामि च परात्परम् । सुखं दुःखं च सुखदं दुःखदं पुण्यमेव च ॥५१॥
पुण्यप्रदं च शुभदं शुभबीजं नमाम्यहम् । इत्येवं स्तवनं कृत्वा दत्त्वा गाश्च स बालकान् ॥५२॥
निपत्य दण्डवद्भूमौ रुरोद प्रणनाम च । ददर्श चक्षुरुन्मील्य विधाता जगतां मुने ॥५३॥
ब्रह्मणा च कृतं स्तोत्रं नित्यं भक्त्या च यः पठेत् । इह लोके सुखं भुक्त्वा यात्यन्ते श्रीहरेः पदम् ॥५४॥
लभते दास्यमतुलं स्थानमीश्वरसन्निधौ । लब्ध्वा च कृष्णसान्निध्यं पार्षदप्रवरो भवेत् ॥५५॥

श्रीनारायण उवाच ॥

गते जगत्कारणे च ब्रह्मलोकं च ब्रह्मणि । श्रीकृष्णो बालकैः सार्धं जगाम स्वालयं विभुः ॥५६॥
गावो वत्साश्च बालाश्च जग्मुर्वर्षान्तरे गृहम् । श्रीकृष्णमायया सर्वे मेनिरे ते दिनान्तरम् ॥५७॥
गोपा गोपालिका किञ्चित्तत्कर्तुं न क्षमास्तदा । योगिनः कृत्रिमं सर्वं किं नूतं वा पुरातनम् ॥५८॥
इत्येवं कथितं सर्वं श्रीकृष्णचरितं शुभम् । सुखदं मोक्षदं पुण्यं सर्वकालसुखावहम् ॥५९॥

इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे नारायणनारदसंवादे गोवत्सबालकहरणप्रस्तावो नाम विंशोऽध्यायः ॥२०॥

आदितः श्लोकानां समष्ट्यङ्काः-१२,२२९+५९=१२,२८८



## ॥ अथैकविंशोऽध्यायः ॥

श्रीनारायण उवाच ॥

एकदाऽऽनन्दयुक्तश्च नन्दो गोपव्रजे मुने । दुन्दुभिं वादयामास शक्रयागकृतोद्यमः ॥१॥
दधि क्षीरं घृतं तक्तं नवनीतं गुडं मधु । एतान्यादाय शक्रस्य पूजां कुर्वन्त्विति ब्रुवन् ॥२॥
येये सन्त्यत्र नगरे गोपा गोप्यश्च बालकाः । बालिकाश्च द्विजा भूयो वैश्याः शूद्राश्च भक्तितः ॥३॥
इत्येवं श्रावयामास स्वयमेव मुदाऽन्वितः । यष्टिमारोपयामास रम्यस्थाने सुविस्तृते ॥४॥
ददौ तत्र क्षौमवस्त्रं मालाजालं मनोहरम् । चन्दनागुरुकस्तूरीकुङ्कुमद्रवमेव च ॥५॥
स्नातः कृताह्निको भक्त्या धृत्वा धौते च वाससी । उवास स्वर्णपीठे च प्रक्षालितपदाम्बुजः ॥६॥
नानाप्रकारपात्रैश्च ब्राह्मणैश्च पुरोहितैः । गोपालैर्गोपिकाभिश्च बालाभिः सह बालकैः ॥७॥
एतस्मिन्नन्तरे तत्राजग्मुर्नगरवासिनः । महासंभृतसंभारा नानोपायनसंयुताः ॥८॥
आजग्मुर्मुनयः सर्वे ज्वलन्तं ब्रह्मतेजसा । शान्ताः शिष्यगणैः सार्धं वेदवेदाङ्गपारगाः ॥९॥
गर्गश्च गालवश्चैव शाकल्यः शाकटायनः । गौतमः करुषः कण्वो वात्स्यः कात्यायनस्तथा ॥१०॥
सौभरिर्वामदेवश्च याज्ञवल्क्यश्च पाणिनिः । ऋष्यशृङ्गो गौरमुखो भरद्वाजश्च वामनः ॥११॥
कृष्णद्वैपायनः शृङ्गी सुमन्तुर्जैमिनिः कचः । पराशरश्च मैत्रेयो वैशम्पायन एव च ॥१२॥
ब्राह्मणाश्च कतिविधा भिक्षुका बन्दिनस्तथा । भूपा वैश्याश्च शूद्राश्च समाजग्मुर्महोत्सवे ॥१३॥
दृष्ट्वा मुनीन्द्रान्नन्दश्च ब्राह्मणान्भूमिपांस्तथा । स्वर्णपीठात्समुत्तस्थौ व्रजाश्चोत्तस्थुरेव च ॥१४॥
प्रणम्य वासयामास मुनीन्द्रान्विप्रभूमिपान् । तेषामनुमतिं प्राप्य तत्रोवास पुनर्मुदा ॥१५॥
पाकं च यष्टिनिकटे कर्तुमाज्ञां चकार ह । पाकप्राज्ञं ब्राह्मणानां शतमानीय सादरम् ॥१६॥
तत्र रत्नप्रदीपाश्च जज्वलुः परितस्तथा । अन्धीभूतं च धूपेन स्थानं तत्सुरभीकृतम् ॥१७॥
नानाविधानि पुष्पाणि माल्यानि विविधानि च । नैवेद्यं च बहुविधमपूर्वं सुमनोहरम् ॥१८॥
तिललड्डुकपूर्णं च मण्डकानां सहस्रकम् । स्वस्तिकैः परिपूर्णं च यष्टिस्थानं च नारद ॥१९॥
कलशानां सहस्रं च पूर्णं शर्करया मुने । यवगोधूमचूर्णानां लड् डुकैर्मधुरैर्वरैः ॥२०॥
घृतपक्वैर्विप्रकृतैः पूर्णानि कलशानि च । वृक्षपक्वानि रम्याणि चारुरम्भाफलानि च ॥२१॥
फलानि परिपक्वानि कालदेशोद्भवानि च । क्षीराणां कुम्भलक्षाणि दध्नां तावन्ति नारद ॥२२॥
मधूनां कुम्भशतकं सर्पिः कुम्भ सहस्रकम् । कलशानां त्रिलक्षाणि तक्रपूर्णानि निश्चितम् ॥२३॥
घटानां पञ्चलक्षाणि गुडपूर्णानि निश्चितम् । तिलतैलेन पूर्णं च कलशानां सहस्रकम् ॥२४॥
वृषेन्द्राश्च बहुविधा भोगार्हद्रव्यवाहकाः । नानाविधानि पात्राणि सौवर्णराजतानि च ॥२५॥
स्वर्णपीठानि च ब्रह्मन्नाजग्मुर्यष्टिसन्निधिम् । वस्त्राणि वरणार्हाणि चारूणि भूषणानि च ॥२६॥
नानाविधानि वाद्यानि चारूणि मधुराणि च । वादकाः स्वरयन्त्राणि वादयामासुरुत्सवे ॥२७॥
छागलानां सहस्राणि महिषाणां शतानि च । मेषकाणां च लक्षाणि ह्यानयामास तत्र वै ॥२८॥
शतान्येव गण्डकानामाजग्मुर्यष्टिसंनिधिम् । प्रेक्षितानि च सर्वाणि रक्षितानि च रक्षकैः ॥२९॥
बालकानां बालिकानां वृक्षाणां वृक्षयोषिताम् । यूनां च युवतीनां च संख्यां कर्तुं च कः क्षमः ॥३०॥
गायकानां च संगीतं नर्तकानां च नर्तनम् । श्रुत्वा दृष्ट्वा जनाः सर्वे मुमुहुः सुमहोत्सवे ॥३१॥
रंभोर्वशी मेनका च घृताची मोहिनी रतिः । प्रभावती भानुमती विप्रचित्तिस्तिलोत्तमा ॥३२॥
चन्द्रप्रभा सुप्रभा च रत्नमाला मदालसा । रेणुका रमणी ब्रह्मन्नेता आजग्मुरुत्सवे ॥३३॥
तासां नृत्येन गीतेन स्तनास्यश्रोणिदर्शनात् । रूपेण वक्रदृष्ट्या च मूर्च्छां प्रापुश्च मानवाः ॥३४॥
एतस्मिन्नन्तरे शीघ्रमाजगाम हरिः स्वयम् । गोपालबालकैः सार्धं बलेन बलशालिना ॥३५॥
दृष्ट्वा तं च जनाः सर्वे संभ्रान्ता हर्षविह्वलाः । उत्तस्थुराराद्भीताश्च पुलकाङ्कितविग्रहाः ॥३६॥
क्रीडास्थानात्समायान्तं शान्तं सुन्दरविग्रहम् । विनोदमुरलीवेणुशृङ्गशब्दसमन्वितम् ॥३७॥
सद्रत्नसारभूषाभिर्भूषितं कौस्तुभेन च । चन्दनागुरुपङ्केन चर्चितं श्यामविग्रहम् ॥३८॥
शरन्मध्याह्नपद्मास्यं पश्यन्तं रत्नदर्पणे । चारुचन्दनचन्द्रेण कस्तूरीबिन्दुना सह ॥३९॥
शशाङ्केन यथाऽऽकाशं भालमध्यविराजितम् । मालतीमालया श्यामकण्ठवक्षःस्थलोज्ज्वलम् ॥४०॥
बकपङ्क्त्या यथाऽऽकाशं शारदीयं सुनिर्मलम् । चारुणा पीतवस्त्रेण शोभितं श्यामविग्रहम् ॥४१॥
विभान्तं विद्युता शश्वन्नवीनं नीरदं यथा । कुन्दप्रसूनैर्गुञ्जाभिर्बद्धवक्रिमचूडकम् ॥४२॥
यथेन्द्रधनुषा भाति विभातं भगणैर्नभः । रत्नकुण्डलदीप्त्या च स्मितवक्त्रसुशोभितम् ॥४३॥
शरत्प्रफुल्लपद्मं च द्युमणेः किरणैर्यथा । विप्रक्षत्रियवैश्याश्च मुनयो बल्लवा मुने ॥४४॥

स्वप्ने सरोवरं दृष्ट्वा समुद्रं वा नदीं नदम् । शुक्लाहिं शुक्लशैलं च दृष्ट्वा श्रियमवाप्नुयात् ॥६९॥
यं पश्यन्ति मृतं स्वप्ने स भवेच्चिरजीवनः । अरोगी रोगिणं दुःखी सुखिनं च ध्रुवं भवेत् ॥७०॥
दिव्या स्त्री यं प्रवदति मम स्वामी भवानिति । स्वप्ने दृष्ट्वा च जागर्ति स च राजा भवेद्दृढम् ॥७१॥
स्वप्ने वा कालिकां दृष्ट्वा लब्ध्वा स्फटिकमालिकाम् । इन्द्रचापं शक्रवज्रं स प्रतिष्ठां लभेद्ध्रुवम् ॥७२॥
स्वप्ने वदति यं विप्रो मम दासो भवेति च । हरिदास्यं च मद्भक्तिं स लब्ध्वा वैष्णवो भवेत् ॥७३॥
स्वप्ने विप्रो हरीः शंभुर्ब्राह्मणी कमला शिवा । शुक्ला स्त्री देवमाता वा जाह्नवी वा सरस्वती ॥७४॥
गोपालिकावेषधरी बालिका राधिका मम । बालश्च बालगोपालः स्वप्नविद्भिः प्रकाशितः ॥७५॥
एष ते कथितो नन्द सुस्वप्नः पुण्यहेतुकः । श्रोतुमिच्छसि किं वा त्वं किं भूयः कथयामि ते ॥७६॥

इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे उत्तरार्धे नारायणनारादसंवादे सुस्वप्नप्रदर्शनं नाम सप्तसप्ततितमोऽध्यायः ॥७७॥

आदितः श्लोकानां समष्ट्यङ्काः-१७,००३+७६=१७,०७९



## ॥ अथाष्टसप्ततितमोऽध्यायः ॥

नन्द उवाच ॥

श्रीकइष्ण जगतां नाथ सुस्वप्नश्च श्रुतो मया । वेदसारो नीतिसारो लौकिको वैदिकस्तथा ॥१॥
अधुना श्रोतुमिच्छामि पापं येषां च दर्शने । यस्मिन्कर्मणि वा वत्स तन्मां कथितुमर्हसि ॥६३॥
वचनं वेदशास्त्रोक्तं तथा वेदानुयायिनः । श्रोतुमिच्छन्ति संतप्ता लोकास्त्वन्मुखतस्तथा ॥३॥
वेदानां जनकस्त्वं च वैदिकानां सतामपि । ब्रह्मादीनां सुराणां च मुनीनां जगतामपि ॥४॥
श्रुतं यत्त्वन्मुखाम्भोजात्प्रमाणं वचनामृतम् । तेन देहोऽभिषिक्तो मे वत्सविच्छेददाहनः ॥५॥
स्वप्ने यच्छरणाम्भोजं सर्वकामफलप्रदम् । ब्रह्मादयो न पश्यन्ति तदद्य दृष्टिगोचरम् ॥६॥
अतः परं त्वत्पदाब्जं क्व पश्यामि च पातकी । विण्मूत्रधारी देहो मे निबद्धश्च स्वकर्मणा ॥७॥
ईदृशं च दिनं वत्स कदा मम भविष्यति । त्वया ब्रह्मादिनाथेन संवादो मम पापिनः ॥८॥
कृपां कुरु कृपानाथ मम दोषं क्षमस्व च । वत्सबुद्ध्या च दुर्नीतं यत्कृतं च महेश्वर ॥६३॥
ब्रह्मेशशेषमुनयो ध्यायन्ते त्वत्पदाम्बुजम् । सरस्वती श्रुतिर्यस्य स्तवने जडतां व्रजेत् ॥१०॥
इत्येवमुक्त्वा नन्दश्च निरानन्दः शुचाऽऽकुलः । मूर्च्छामाप रुदित्वा च पुत्रविच्छेदविह्वलः ॥११॥
संत्रस्तो भगवान्कृष्णो बोधयामास यत्नतः । परमाध्यात्मिकं ज्ञानं ददौ तस्मै जगत्पतिः ॥१२॥

श्रीभगवानुवाच ॥

हे नन्द जनकश्रेष्ठ सर्वश्रेष्ठ व्रजेश्वर । चेतनं कुरु कल्याण ज्ञानं च परमं श्रृणु ॥१३॥
परमाध्यात्मिकं ज्ञानं ज्ञानिनां च सुदुर्लभम् । वेदशास्त्रे गोपनीयं तुभ्यमेव ददाम्यहम् ॥१४॥
निबोध श्रूयतां नन्द सानन्दः सुसमाहितः । जन्ममृत्युचराव्याधिर्यदभ्यासान्न जायते ॥१५॥
स्थिरो भव महाराज व्रजनाथ व्रजं व्रज । ज्ञानं लब्ध्वा सदानन्दः शोकमोहविवर्जितः ॥१६॥
जलबुद्बुदवत्सर्वं संसारं सचराचरम् । प्रभाते स्वप्नवन्मिथ्या मोहकारणमेव च ॥१७॥
मिथ्याकृत्रिमनिर्माणहेतुश्च पाञ्चभौतिकः । मायया सत्यबुद्ध्या च प्रतीतिं जायते नरः ॥१८॥
कामक्रोधरोभमोहैर्वेष्टितः सर्वकर्मसु । मायया मोहितः शश्वज्ज्ञानहीनश्च दुर्बलः ॥१९॥
निद्रातन्द्राक्षुत्पिपासाक्षमाश्रद्धादयादिभिः । लज्जा शान्तिर्धृतिः पुष्टिस्तुष्टिश्चाऽऽभिश्च वेष्टितः ॥२०॥
मनोबुद्धिचेतनाभिः प्राणज्ञानात्मभिः सह । संसक्तः सर्वदेवैश्च यथा वृक्षश्च वायसैः ॥२१॥
अहमात्मा च सर्वेशः सर्वज्ञानात्मकः स्मृतः । मनो ब्रह्मा च प्रकृतिर्बुद्धिरुपा सनातनी ॥२२॥
प्राणा विष्णुश्चेतना सा पद्मा तु चाधिदेवता । मयि स्थिते स्थिताः सर्वे गतास्तेऽपिगते मयि ॥२३॥
अस्माभिश्च विना देहः सद्यः पतति निश्चितम् । पाञ्चभूतो विलीनश्च पञ्चभूतेषु तत्क्षणम् ॥२४॥
नामसंकेतरूपं च निष्फलं मोहकारणम् । शोकश्चाज्ञानिनां तात ज्ञानितां नास्ति किंचन ॥२५॥
निद्रादयः शक्तयश्च ताः सर्वाः प्रकृते कलाः । लोभादयो ह्यधर्मांशास्तथाऽहंकारपञ्चमः ॥२६॥
ते ब्रह्मविष्णुरुद्रांशा गुणाः सत्त्वादयस्त्रयः । ज्ञानात्मकः शिवो ज्योतिरहमात्मा च निर्गुणः ॥२७॥
यदा विशामि प्रकृतौ तदाऽहं सगुणः स्मृतः । सगुणा विषया विष्णुब्रह्मरुद्रादयस्तथा ॥२८॥
धर्मो मदंशो विषयी शेषः सूर्यः कलानिधिः । एवं सर्वे सत्कलांशा मुनिमन्वादयःसुराः ॥२९॥
सर्वदेहे प्रविष्टोऽहं न लिप्तः सर्वकर्मसु । जीवन्मुक्तश्च मद्भक्तो जन्ममृत्युजराहरः ॥३०॥
सर्वसिद्धेश्वरः श्रीमान्कीर्तिमान्पण्डितः कविः । चतुस्त्रिंशद्विधः सिद्धः सर्वकर्मोपहारकः ॥३१॥
तमुपैमि स्वयं सिद्धं भक्तस्त्वन्यन्न वाञ्छति । द्वाविंशतिविधं सिद्धं सिद्धिसाधनकारणम् ॥३२॥

मन्मुखाच्छ्रूयतां नन्द सिद्धमन्त्रं गृहाण च । अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा ॥३३॥
ईशित्वं च वशित्वं च तथा कामावसायिता । दूरश्रवणमेवेति परकायप्रवेशनम् ॥३४॥
मनोयायित्वमेवेति सर्वज्ञत्वमभीप्सितम् । वह्निस्तम्भं जलस्तम्भं चिरंजीवित्वमेव च ॥३५॥
कायव्यूहं च वाक्सिद्धिं मृतानयनमीप्सितम् । सृष्टीनां करणं चैव प्राणाकर्षणमेव च ॥३६॥
ॐ सर्वेश्वरेश्वराय सर्वविघ्नविनाशिने मधुसूदनाय स्वाहेति । अयं मन्त्रो महागूढः सर्वेषां कल्पपादपः ॥
सामवेदे च कथितः सिद्धानां सर्वसिद्धिदः ॥३७॥
अनेन योगिनः सिद्धा मुनीन्द्राश्च सुरास्तथा । शतलक्षजपेनैव मन्त्रसिद्धिर्भवेत्सताम् ॥३८॥
यदि नारायणक्षेत्रे हविष्यान्नरतो जपेत् । गत्वा कुरु जपं तात काशिकां मणिकर्णिकाम् ॥३९॥
श्रृणु नारायणक्षेत्रे जलाधस्तच्चतुष्टयम् । अत्र नारायणः स्वामी नान्यः स्वामी कदाच ॥४०॥
ज्ञानं चात्र मृते लोके मूर्तिर्भवति तस्य वै । व्रतं विनाऽपि मन्त्रेण जीवन्मुक्तो न संशयः ॥४१॥
व्रजं कुरु पवित्रं च व्रजनाथ व्रजं व्रज । पापं यद्दर्शने तात कथयामि निशामय ॥४२॥
दुःस्वप्नं पापबीजं च केवलं विघ्नकारणम् । गोघ्नं च ब्राह्मणघ्नं वा कृतघ्नं कुटिलं तथा ॥४३॥
देवघ्नं पितृमातृघ्नं पापं विश्वासघातिनम् । मिथ्यासाक्षिप्रदातारं यं चाऽऽतिथ्यविवञ्चनम् ॥४४॥
ग्रामयाजिनमेवेति देवविप्रस्वहारिणम् । अश्वत्थघातिनं दुष्टं शिवविष्णुविनिन्दकम् ॥४५॥
अदीक्षितमनाचारं संध्याहीनं द्विजं तथा । देवलं वृषवाहं च शूद्राणां सूपकारकम् ॥४६॥
शवदाहं च शूद्राणां शूद्रश्राद्धान्नभोजिनम् । अवीरां छिन्ननासां च देवब्राह्मणनिन्दकाम् ॥४७॥
पतिभक्तिविहीनां च विष्णुभक्तिविहीनकाम् । शूद्राणां विधवां चैव चाण्डालीं व्यभिचारिणीम् ॥४८॥
शश्वत्कोपयुतं दुष्टमृणग्रस्तं च जारजम् । चौरं मिथ्यावादिनं च शरणागतयायिनम् ॥४९॥
मांसापहारिणं चैव ब्रह्मणं वृषलीपतिम् । ब्राह्मणीगामिनं शूद्र द्विजं वार्धुषिकं तथा ॥५०॥
अगम्यागामिनं दुष्टं चतुर्वर्णं नराधमम् । माता सपत्नीमाता च श्वश्रूश्च भगिनी सुता ॥५१॥
गुरुपत्नी पुत्रपत्नी सोदरस्य प्रिया सती । मातृष्वसा पितृष्वसा भागिनेयप्रिया तथा ॥५२॥
मातुलानी नवोढा य पितृव्यस्त्री रजस्वला । पितृमातृप्रसूश्चैव चागम्याष्टादश स्मृताः ॥५३॥
कीर्तिताः सामवेदे च परिपाल्याः सतां व्रज । एता दृष्ट्वा च स्पृष्ट्वा च ब्रह्महत्यां लभेन्नरः ॥५४॥
तस्माद्दैवेन ता दृष्ट्वा सूर्यं दृष्ट्वा हरिं स्मरेत् । कामतो यदि पश्यन्ति विनिन्द्यास्ते भवन्ति वै ॥५५॥
तस्मात्सन्तो न पश्यन्ति शापभीता व्रजेश्वर । राहुग्रस्तं रविं सोमं न पश्यन्ति विपश्चितः ॥५६॥
जन्माष्टसप्तारिः फाङ्कदशमस्थे दिवाकरे । जन्मर्क्षे निधने चापि चतुर्थेऽपि कलानिधौ ॥५७॥
नष्टचन्द्रो न दृश्यश्च भाद्रे मासि सितासिते । चतुर्थ्यामुदितश्चन्द्रः परित्यक्तो मनीषिभिः ॥५८॥
चन्द्रस्तारापहरणं कलङ्कमतिदुष्करम् । तस्मै ददाति हे नन्द कामतो यदि पश्यति ॥५९॥
अकामतो नरो दृष्ट्वा मन्त्रपूतं जलं पिबेत् । तदा शुद्धो भवेत्सद्यो निष्कलङ्की महीतले ॥६०॥
सिंहः प्रसेनमवधीत्सिंहो जाम्बवता हतः । सुकुमारक मारोदीस्तव ह्येष स्यमन्तकः ॥६१॥
इति मन्त्रेण पूतं च जलं साधुः पिबेद्ध्रुवम् । इति ते कथितं सर्वमपरं कथयामि ते ॥६२॥

इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे उत्तरार्धे नारायणनारदसंवादे भगवन्नन्दसंवादे अष्टसप्ततितमोऽध्यायः ॥७८॥

आदितः श्लोकानां समष्ट्यङ्काः-१७,०७९+६२=१७,१४१



## ॥ अथैकोनाशीतितमोऽध्यायः ॥

नन्द उवाच ॥
राहुग्रस्तः कथं सूर्यश्चन्द्रो वाऽपि जगत्प्रभो । नेष्टश्चन्द्रः कथं भाद्रे चतुर्थ्यां चासिते सिते ॥१॥
वेदानां जनकस्त्वं च कं पृच्छामि त्वया विना । वेदे पुराणे गोप्यं यन्न जानन्ति विपश्चितः ॥
इति तद्वचनं श्रुत्वा चेदं वचनमब्रवीत् ॥२॥
श्रीभगवानुवाच ॥
अतथ्यं वचनं चेदं निषिद्धं वैदिकैरपि । क्षमस्व नन्द भद्रं ते प्रश्नमन्यं कुरुष्व माम् ॥३॥
विश्वस्तं वचनं तात न प्रकाश्यं मनीषिभिः । विघ्नः प्रकाशे भवति सतां छिद्रं च दैवतः ॥४॥
नन्द उवाच ॥
कथयस्व जगन्नाथ न भक्ते वचनं कुरु । अदृश्यौ चापि देवेशौ राहुग्रस्तौ च पुण्यदौ ॥५॥
श्रीभगवानुवाच ॥
शृणु नन्द प्रवक्ष्यामि कथामेतां पुरातनीम् । यां श्रुत्वा निष्कलङ्कश्च तीर्थस्नायी भवेन्नरः ॥६॥
सर्वपातकिनं दृष्ट्वा यत्पापं लभते नरः । आख्यानश्रवणेनैव भस्मीभूतं भविष्यति ॥७॥

एकदा जमदग्निश्च महाकौतूहलान्वितः । रेणुकासहितस्तुष्टो जगाम नर्मदातटम् ॥८॥
निर्जने नर्मदातीरे विजहार तया सह । नवोढया च सुन्दर्या नवयौवनयुक्तया ॥९॥
सुवेषया सुस्मितया रत्नभूषणयुक्तया । नतया स्तनभारेण श्रोणीभारेण मन्दया ॥१०॥
सुन्दरीणामतुलया श्वेतचम्पकवर्णया । सुपूर्णचन्द्राननया कटाक्षयुतया तथा ॥११॥
अतीवसूक्ष्माम्बरया कामबाणार्तया व्रज । पुलकाञ्चितसर्वाङ्गसंभोगेनापि मूर्च्छया ॥१२॥
पुंस्कोकिलयुते रम्ये शब्दिते सुमधुव्रते । सुगन्धिवायुसंयुक्ते पुष्पतल्पान्विते शुभे ॥१३॥
चन्दनोक्षितसर्पाङ्गं वस्त्रमाल्यधरं मुनिम् । महारासरसाढ्यं तमुवाच भास्करः स्वयम् ॥१४॥
वेदकर्तुः प्रपौत्रस्त्वं ब्रह्मणश्च जगत्पतेः । चतुर्वेदविधेयेषु सुनिष्णातः सदा शुचिः ॥१५॥
वेदाङ्गकर्ता धर्मज्ञः श्रेष्ठो वेदविदां वरः । महातपस्वी तेजस्वी ब्रह्मचारी च सुव्रती ॥१६॥
युष्मद्विधोक्तं शास्त्रं च पठित्वाऽन्यश्च पण्डितः । वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ॥१७॥
धर्मं त्यजति धर्मज्ञो ह्यधर्मेण रतः कथम् । दिवामैथुनदोषं च वक्ति वेदो विशेषतः ॥१८॥
अहं च धर्मिणां साक्षी तेन त्वां कथयामि ते । सूर्यस्य वचनं श्रुत्वा तत्याज मैथुनं द्विजः ॥१९॥
दृष्ट्वा पुरो विप्ररूपं सूर्यं तेजस्विनं सुरम् । उवाच सूर्यं रक्तास्यः कोपलज्जासमन्वितः ॥
रेणुका लज्जिता तत्र विधार्य वाससी सती ॥२०॥
जमदग्निरुवाच ॥
को भवान्पण्डितं मन्यो न त्वदन्योऽस्ति पण्डितः ॥२१॥
अहं भृगोर्भगवतः शिष्यस्त्वं कश्यपस्य च । चतुर्वेदांश्च जानामि धर्माधर्मनिरूपणे ॥२२॥
वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः । अज्ञानी पुरुषः शश्वज्जडितश्च स्वकर्मणा ॥२३॥
तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा । अन्ये भवांश्च धर्मश्च साक्षी सर्वे च कर्मणाम् ॥२४॥
फलदाता च शास्त्रज्ञो यतस्त्वत्तनयः सदा ।न वैष्णवानां शास्तारो यूयमस्माकमेव च ॥२५॥
न वासुदेवभक्तानामशुभं विद्यते क्वचित् । हरेः सुदर्शनं चक्रं शश्वद्रक्षति वैष्णवान् ॥२६॥
नारायणश्च भगवान्स्वयं ब्रह्मा च शंकरः । शास्ता यमश्च नास्माकं त्वं वै नापि दिवाकर ॥२७॥
राजपुत्रो यथा स्थाने वयं स्वच्छन्दगामिनः । शक्तोऽहं भस्मसात्कर्तुं यमं सर्वसुरांस्तथा ॥२८॥
महेन्द्रप्रभृतीन्सूर्य क्षणेनैवावलीलया । कस्त्वं धर्मप्रवक्ता मे याहि स्वस्थानमेव च ॥२९॥
मम शास्ता तु भगवाञ्छ्रीकृष्णः प्रकृतेः परः । अद्य मे निर्जने स्थाने रसभङ्गस्त्वया कृतः ॥३०॥
मम शापात्पापदृश्यो राहुग्रस्तो भविष्यसि । द्रष्टुं त्वां ये घनाः सर्वे दूरीभूता भवन्ति ते ॥३१॥
त्वामाच्छन्नं करिष्यन्ति वायुना प्रेरितास्तथा । स्वतेजसा भवान्गर्वाद्धततेजा भविष्यसि ॥३२॥
मेघाच्छन्नः स्वल्पतेजा राहुग्रस्तो भवान्भव । ब्राह्मणस्य वचः श्रुत्वा भगवान्भास्करः स्वयम् ॥
ततः पुटाञ्जलिर्भूत्वा तुष्टाव मुनिपुंगवम् ॥३३॥
भास्कर उवाच ॥
अवध्याः सर्वे धर्मज्ञ धन्या मान्याः पुरस्कृताः ॥३४॥
नारायणश्च भगवाञ्छंभुर्ब्रह्मा स्वयं प्रभुः । गणेशाश्चापि शेषश्च धर्मश्चापि सनातनः ॥३५॥
स्तुवन्ति ब्रह्मणं सर्वे विप्ररूपी जनार्दनम् ।(विप्रदत्तश्च यो ब्रह्मन्वयमस्मन्मुखो द्विजः ।
(हुताशनश्च द्विमुखाः सुराः सर्वे द्विजो वरः ॥) क्षमस्व वैष्णवः शुद्धः स्वधर्मं स समाचर ॥३६॥
वैष्णवानां कृतः कोपो हृदि येषां जनार्दनः । अस्माभिः पूजिता विप्रा युष्माभिः पूजिताः सुराः ॥३७॥
परस्परं स्नेहपात्रं चेदमाचरणं द्विज । अहमेव त्वया शप्तो मया शप्तो भवान्भव ॥३८॥
अन्यथा मां वदन्त्येवं सूर्य निस्तेजसं जनाः । पराभूतः क्षत्रियेण भविष्यसि द्विजेश्वर ॥३९॥
मरणं क्षत्रियास्त्रेण भवतश्च भविष्यति । सूर्यस्य वचनं श्रुत्वा चुकोप ब्राह्मणः पुनः ॥
तं शशापातिरक्तास्यः शंभुना निर्जितो भवान् ॥४०॥
उभयोः कलहं ज्ञात्वा कश्यपेन सह व्रज । आजगाम स्वयं ब्रह्मा विधाता जगतामपि ॥४१॥
आगत्य ब्रह्मा संत्रस्तं बोधयामास भास्करम् । मुनिश्रेष्ठं च धर्मज्ञं धर्मज्ञानां गुरो र्गुरुः ॥४२॥
ब्रह्मोवाच ॥
क्षमस्व भास्कर त्वं च साक्षान्नारायणो भवान् । युष्माकं परिपाल्यश्चाप्यवध्यो ब्राह्मणाः सदा ॥४३॥
अहं करोमि भवतो विप्रशापान्तमुल्बणम् । अत्राहमागतस्त्रस्तो भृगुणा प्रेरितस्ततः ॥४४॥
स्फुटोऽहं प्रेरितश्चापि कश्यपेन मरीचिना । शान्तो भव सुरश्रेष्ठ साक्षी त्वं सर्वकर्मणाम् ॥४५॥
कुत्रचिद्दिवसे ब्रह्मंस्त्वां तत्र कुत्रचित्क्षणम् । भविष्यसि घनाच्छन्नः सद्यो मुक्तो भविष्यसि ॥४६॥
न्यूनातिरक्ते वर्षे च राहुग्रस्तो भविष्यसि । तत्रादृश्यश्च केषांचित्पुण्यदृश्यो हि कस्यचित् ॥४७॥
अन्यथा सर्वकालेन पुण्यदृश्यो भवान्भुवि । त्वां दृष्ट्वा च नमस्कृत्य सर्वे निष्पापिनो जनाः ॥४८॥

जन्मसप्ताष्टरिः फाङ्कचतुर्थे दशमे तथा । जन्मर्क्षे निधनं नृणामदृश्यस्त्वं भविष्यसि ॥४९॥
अस्तकाले घनाच्छन्ने मध्याह्नस्थे जलेऽपि वा । अर्द्धोदिते च काने च पापदृश्यो भविष्यसि ॥५०॥
भार्यादुःखनिमित्तेन भार्यया हेतुभूतया । श्वशुरेण शालकेन हततेजा भविष्यसि ॥५१॥
अन्यथा तव तेजश्च संज्ञा सहितुमक्षमा । मालीसुमालियुद्धे च शंभुना त्वं पराचितः ॥५२॥
इत्येवमुक्त्वा सूर्यं च बोधयामास ब्राह्मणम् । नम्रं शापपराभूतं लज्जितं कोपितं व्रज ॥५३॥
हे विप्र श्वगृहं गच्छ गच्छ वत्स यथासुखम् । त्वत्तेजसा क्षणेनैव भस्मीभूतं भवेज्जगत् ॥५४॥
सूर्यस्त्वत्परिपाल्यश्च भवान्सूर्यस्य नित्यशः । परस्परं च पूज्यश्च संबन्धः पोष्यपोषकः ॥५५॥
हर्यंशेन क्षत्रियेण कार्तवीर्यार्जुनेन च । भविष्यसि न संदेहः पराभूतो द्विजो मृतः ॥५६॥
पुरा ते प्राक्तनं सर्वं कदाचिन्न हि खण्डितम् । नारायणाश्च स्वांशोन तव पुत्रो भविष्यति ॥५७॥
त्रिः सप्तकृत्वो जगतीं निःक्षत्रां च करिष्यति । मृत्युस्ते यशसो बीजं भविष्यति महीतले ॥५८॥
इत्येवमुक्त्ता ब्रह्मा च ययौ गेहं व्रजेश्वर । प्रययौ जमदग्निश्च भास्करश्च स्वमन्दिरम् ॥५९॥
इत्येवं कथितं तात आख्यानं पुण्यकारकम् । राहुग्रस्तो भास्करश्चाप्यदृश्यो येन हेतुना ॥६०॥
चतुर्थ्यामुदितश्चन्द्रो भाद्रे मासि सितासिते । अदृश्यो नष्टरूपश्च श्रूयतां येन हेतुना ॥६१॥
राहुग्रस्तः कलङ्की वा पुरा शप्तो मया पितः । सर्वं त्वां कथयिष्यामि कथामेतां पुरातनीम् ॥६२॥

इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे उत्तरार्धे नारायणनारदसंवादे भगवन्नन्दसंवादैकोनाशीतितमोऽध्यायः ॥७९॥

आदितः श्लोकानां समष्ट्यङ्काः-१७,१४१+६२=१७,२०३



## ॥ अथाशीतितमोऽध्यायः ॥

श्रीकृष्ण उवाच ॥

पुरा तारा गुरोः पत्नी नवयौवनसंयुता । रत्नभूषणभूषाढ्या वरसूक्ष्माम्बरा सती ॥१॥
सुश्रोणी सस्मिता रम्य सुन्दरी सुमनोहरा । अतीव कबरीरम्या मालतीमाल्यभूषिता ॥२॥
मिन्दूरबिन्दुना साकं चारुचन्दनबिन्दुभि । कस्तूरीबिन्दुनाऽधश्च भालमध्यस्थलोज्वला ॥३॥
रत्नेन्द्रसारनिर्माणक्वणन्मञ्जीररञ्जिता । सु वक्रलोचना श्यामा सुचारुकज्जलोज्वला ॥४॥
सुचारुसारमुक्ताभदन्तपङ्क्तिनोहरा । रत्नकुण्डलयुग्मेन चारुगण्डस्थलोज्वला ॥५॥
कामिनीष्वतुला बाला गजेन्द्रमन्दगामिनी । सुकोमला चन्द्रमुखी कामाधारा च कामुकी ॥६॥
स्वर्गमन्दाकिनीतीरे स्नाता स्निग्धाम्बरा वरा । ध्यायन्ती गुरुपादं सा स्वगृहं गमनोन्मुखी ॥७॥
दृष्ट्वा तस्याश्च सर्वाङ्गमनङ्गबाणपीडितः । भाद्रे चतुर्थ्यां चन्द्रश्च जहार चेतनां व्रज ॥८॥
ज्ञानं क्षणेन संप्राप्य रथस्थो रसिको बली । रथमारोहयामास करे धृत्वा च तारकम् ॥९॥
कामोन्मत्तः कामिनीं तां समाश्लिष्य चुचुम्ब च । शृङ्गारं कर्तुमुद्युक्तं तमुवाच गुरुप्रिया ॥१०॥

तारकोवाच ॥

त्यज मां त्यज मां चन्द्र सुरेषु कुलपांसन । गुरुपत्नीं ब्राह्मणीं च पातिव्रत्यपरायणाम् ॥११॥
गुरुपत्नीसंगमने ब्रह्महत्याशतं भवेत् । गुरुपत्नी विप्रपत्नी यदि सा च पतिव्रता ॥
ब्रह्महत्यासहस्रं च तस्याः संगमने लभेत् ॥१२॥
पुत्रस्त्वं तव माताऽहं धैर्यं कुरु सुरेश्वर । धिक्त्वां श्रुत्वा सुरगुरुर्भस्मीभूतं करिष्यति ॥१३॥
पुत्राधिकश्च शिष्यश्च प्रियो मत्स्वामिनो भवान् । स्वधर्मं रक्ष पापिष्ठ मामेवं मातरं त्यज ॥१४॥
दास्यामि स्त्रीवधं तुम्यं यदिमां संग्रहीष्यसि । विलङ्घ्य तारावचनं तां च संभोक्तुमुद्यतम् ॥१५॥
शशाप तारा कोपेन निष्कामा सा पतिव्रता । राहुग्रस्तो घनग्रस्तः पापदृश्यो भवान्भव ॥१६॥
कलङ्की यक्ष्मणा ग्रस्तो भविष्यसि न संशयः । चन्द्रं शप्त्वा तदा तूर्णं कामदेवं शशाप सा ॥१७॥
तेजस्विना केनचित्त्वं भस्मीभूतो भविष्यसि । चन्द्रस्तारां गृहीत्वा च कृत्वाऽपि रमणं व्रज ॥१८॥
क्रोडेनिधाय प्रययौ रुदतीं ता शुचाऽन्विताम् । निर्जने निर्जने रम्ये शैले शैले मनोहरे ॥१९॥
सरोनदनदीनां च तीरे तीरे मनोहरे । मधुव्रतपिकोक्ते च पुष्पोद्याने सुपुष्पिते ॥२०॥
रम्यायां पुष्पशय्यायां स रेमे रामया सह । चदनोक्षितसर्वाङ्गो मधुपानरतः सुरः ॥२१॥
सुखसंभोगसंसक्तो बुबुधे न दिवानिशम् । मलये मलयारण्ये मलयानिलसंयुते ॥२२॥
स्यन्दने चन्दनवने पश्चिमोदधिसंनिधौ । त्रिकूटे वटमूले च तत्र चन्द्रसरोवरे ॥२३॥
सुचारुशतपत्राणां पत्रे चन्दनचर्चिते । सुचारुचम्पकोद्याने चम्पकानिलपूजिते ॥२४॥
क्षीरोदकाञ्चनीभूमौ क्रौञ्चकाञ्चनपर्वते । रत्नशैले मणिमये मणिमन्दिरसुन्दरे ॥२५॥
माणिक्यमुक्तासारेण हीरहारेण शोभिते । सुचारुवस्त्रचित्राढ्ये श्वेतचामारदर्पणैः ॥२६॥

भूषिते रत्नदीपैश्च देवक्रोडे प्रियस्थले । वारुणीं मदिरां पीत्वा वरुणानीसमन्वितः ॥२७॥
बरुणो रमते यत्र तत्र रेमे तया सह । पावने पवनोद्याने परिजातानिलेन च ॥२८॥
सुगन्धिमोहिते रत्नमालातीरे च निर्मले । ऋक्षशैले कल्पवृक्षवने वह्निप्रियाश्रमे ॥२९॥
पपौ च कामधेनूनां क्षीरं क्षीरोदधेस्तटे । वह्निशुद्धांशुकयुगं वह्निस्तस्मै ददौ मुदा ॥३०॥
वरुणो रत्नमालां च रत्नच्छत्रं समीरणः । तत्र दृष्ट्वाऽसुरगुरुं बलिगेहात्समागतम् ॥३१॥
प्रणम्य सर्वमुक्त्वा च चन्द्रस्तं शरणं ययौ । शुक्रस्तं बोधयामास वचनं नीतियुक्तितः ॥
निरपेक्षो मुनिश्रेष्ठो वेदवेदाङ्गपारगः ॥३२॥
शुक्र उवाच ॥
शृणु वत्स प्रवक्ष्यामि गुरवे देहि तारकाम् । शंभोश्च गुरुपुत्राय पौत्राय ब्रह्मणश्च वै ॥३३॥
पूजिताय सुराणां च देया तस्मै निशापते । प्रियाय तत्प्रियां दत्वा शीघ्रं त्वं शरणं व्रज ॥३४॥
गुरुपत्नीं मातृतुल्यां त्यज मद्वचनाद्विधो । कुरु पापक्षयं पापनिवृत्तिस्तु महाफला ॥३५॥
सतीनां गुरुपत्नीनां ग्रहणे च बलेन च । ब्रह्महत्यासहस्राणां पातकं लभते जनः ॥३६॥
कुम्भीपाके च पच्यन्ते यावद्वै ब्रह्मणः शतम् । साम्यं नारायणस्थाने तृणपर्वतयोः सुर ॥३७॥
कस्त्वं वत्स हरेः स्थाने कर्मभोगोऽस्ति ब्रह्मणः । नारायणाश्रीताः सर्वे जीविनस्त्रिविधा भवे ॥३८॥
इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे उत्तरार्धे नारायणनारदसंवादे
भगवन्नन्दसंवादे ताराहरणेऽशीतितमोऽध्यायः ॥८०॥
आदितः श्लोकानां समष्ट्यङ्काः-१७,२०३+३८=१७,२४१



## ॥ अथैकाशीतितमोऽध्यायः ॥

श्रीकृष्ण उवाच ॥
एतस्मिन्नन्तरे शुक्रः सुरश्रेणीं ददर्श सः । आकाशमार्गादायान्तीं रणशस्त्रास्त्रधारिणीम् ॥१॥
पताकानां त्रिकोटिश्च शतकोटिर्महारथाः । शतकोटिर्गजेन्द्राणां रथानां तच्चतुर्गुणम् ॥२॥
अश्वानां तत्छतगुणं समूहं च सुदारुणम् । पदातीनां समूहं च तुरङ्गेभ्यश्च षड्गुणम् ॥३॥
दुंदूभीवाद्यभाण्डानां पञ्चलक्षं तथैव च । पटहानां त्रिलक्षं च डिण्डिमानां द्विलक्षकम् ॥४॥
ऐरावते महेन्द्रं च श्वेताश्वे धर्ममेव च । कुबेरं वरुणं वह्निं रथस्थं पवनं तथा ॥५॥
महिषस्थं यमं चैव स्यन्दनस्थं दिवाकरम् । ईशानं च वृषेन्द्रस्थमनन्तं नागवाहनम् ॥६॥
आदित्यांश्च वसून्रुद्रान्सिद्धगन्धर्वकिन्नरान् । जीवन्मुक्तमुनीनां च समूहं सूर्यवर्चसम् ॥७॥
तान्दृष्ट्वा निर्भयः शुक्रः समाश्वास्य निशाकरम् । सुराणां द्विगुणं सैन्यमाजुहाव व्रजेश्वर ॥८॥
रत्नमालानदीतीरे हुताशनप्रियाश्रमे । तत्र तस्थौ दैत्यसैन्यं पुण्यक्षीरोदधेस्तटे ॥९॥
एतस्मिन्नन्तरे शुक्रः समीपे सरसस्तटे । पुण्याश्रमेऽक्षयवटे सुरसैन्यात्समागतम् ॥१०॥
ददर्श वृषभस्थं च शंकरं सर्वशंकरम् । त्रिशूलपट्टीशधरं व्याघ्रचर्माम्बरं वरम् ॥११॥
तेजःस्वरूपं परमं भक्तानुग्रहविग्रहम् । सर्वसंपत्प्रदातारं सर्वज्ञं सर्वकारणम् ॥१२॥
सर्वेश्वरं सर्वपूज्यं सर्वरूपं सनातनम् । शरणागतदीनार्तपरित्राणपरायणम् ॥१३॥
सस्मितं परमात्मानं ज्वलन्तं ब्रह्मतेजसा । संत्रस्तः सहसोत्थाय प्रणनाम पदाम्बुजे ॥१४॥
ददौ शुभाशिषं तस्मै सुप्रसन्नः परात्परः । रत्नसिंहासने तं च वासयामास सादरम् ॥१५॥
अथ तत्रान्तरे विप्रं पुरतस्तं ददर्श सः । शान्तं स्वयं विधातारं रत्नस्यन्दनसुन्दरम् ॥१६॥
वह्निशुद्धांशुकाधानं रत्नमालाविभूषितम् । प्रसन्नं सुस्मितं शुद्धं जगतामीश्वरं परम् ॥१७॥
कर्मणां फलदातारं तपोरूपं तपश्विनाम् । वेदानां जनकं वेदप्रसूं कान्तं मनोहरम् ॥१८॥
पुटाञ्जलिस्तदा त्रस्तः प्रणनाम सुरेश्वरम् । रत्नसिंहासने रम्ये वासयामास भक्तितः ॥१९॥
पूजां चकार भक्त्या च तयोश्चरणपङ्कजे । नोचितं कुशलप्रश्नं तयोः कल्याणमेव च ॥२०॥
विधाता जगतां नन्द शुक्रमाचार्यं पुरतः स्थितम् । सुनीतिं कथयामास यत्नतः शंभुसंमतः ॥२१॥
श्रृणु शुक्र प्रवक्ष्यामि दुर्नीतिं शशिनः सुत । लज्जाकारं त्रिजगतां कर्म वेदबहिष्कृतम् ॥२२॥
स्नात्वा गृहोन्मुखीं तारां गुरुपत्नीं पतिव्रताम् । गृहीत्वा शरणापन्नस्त्वयि पापश्च सांप्रतम् ॥२३॥
प्रस्तुतं देवसैन्यं च पश्य वत्स रणोद्यतम् । अहं शंभुस्त्वत्समीपं तदर्थं च समागतौ ॥२४॥
शंभुरुवाच ॥
चन्द्रमानय हे विप्र यद्यात्मशिवमिच्छसि । संहरिष्ये सिरस्तस्य त्रिशूलेन च पापिनः ॥२५॥
अन्यथा संहरिष्यामि सर्वदैत्यान्क्षणेन च । मयि रुष्टे रक्षिता को दैत्यानां च भवेद्द्विज ॥२६॥

सद्यः पाशुपतेनैव वाय्वस्त्रेण च साम्प्रतम् । सुराणां रिपुवर्गं च हरिष्यामि च लीलया ॥२७॥
दुर्वाससो मदंशस्य गुरुस्तस्याङ्गिरा मुनिः । परस्पराच्च संबन्धाद्गुरुपुत्रो गुरुर्मम ॥२८॥
बृहस्पतिश्च तेजस्वी तं भस्मीकर्तुमीश्वरः । न चकार कृपालुश्चेतिप्रियशिष्येण हेतुना ॥२९॥
उतथ्यपत्नीं दृष्ट्वा स पुरा रेमे स्वकामतः । तत्पतेः शापतोऽस्यैव परग्रस्ता प्रिया सती ॥३०॥
पत्नीं मद्गुरुपुत्रस्य देहि तारां मनोहराम् । मद्वैरिणं च चन्द्रं च भ्रातृभार्यापहारिणम् ॥३१॥
शरणागतदीनार्तं न हि रक्षेद्यदीश्वरः । पच्यते निरये तावद्यावदिन्द्राश्चतुदर्श ॥३२॥
अत्र नास्ति विचारो मे पापिष्ठे शरणागते । पापी यं शरणं याति स पापी च न संशयः ॥३३॥
देहि तं विप्रशार्दूल पापिनं मातृगामिनम् । बहिष्कृत्य स्वाश्रमाच्च तारासाध्वीसमन्वितम् ॥३४॥
शुक्र उवाच ॥
सुराणामसुराणां च सर्वेषां जगतामपि । त्वमेव शास्ता भगवान्को वा शास्ति सुरेऽसुरे ॥३५॥
कृत्वा सुराणां साहाय्यं कथं दैत्यान्हनिष्यसि । संहर्तुः सर्वजगतां दैत्यौघे किं च पौरुषम् ॥३६॥
त्वं ज्योतिः परमं ब्रह्म सगुणो निर्गुणः स्वयम् । गुणभेदान्मूर्तिभेदो ब्रह्मविष्णुशिवात्मकः ॥३७॥
बलिद्वारे गदापाणिः स्वयमेव भवान्प्रभो । स्वयं प्रदत्ता शक्राय तस्मै श्रीरपि लीलया ॥३८॥
क्षमस्व भगञ्छंभो हर क्रोधं च संहर । किं पौरुषं च भवतो ब्रह्मणस्यापि हिंसया ॥३९॥
अहं जीवञ्छरीरेण न दास्यामि निशाकरम् । शरणागतदीनार्तं लज्जितं पापसंयुतम् ॥४०॥
अहं च त्वत्पदाम्भोजे शरणं यामि शंकर । यथोचितं कुरु विभो जगत्सर्वं तथैव च ॥४१॥
शुक्रस्य वचनं श्रुत्वा प्रसन्नो भगवाञ्छिवः । इत्युवाच निशानाथं समानय शुभं भवेत् ॥४२॥
एतस्मिन्नन्तरे ब्रह्मा बोधयित्वा कविं विभुः । समानीय निशानाथं तारकासहितं व्रज ॥४३॥
शंभोश्च चरणाम्भोजे चकार च समर्पणम् । शंभुस्तं प्रीतियुक्तश्च वासयामास वक्षसि ॥४४॥
दत्त्वा तस्मै पादरेणुं निष्पापं च चकार सः । दत्त्वा तन्मस्तके हस्तं कृपालुरभयं ददौ ॥४५॥
क्षीरोदे स्नापयित्वा च प्रायश्चित्तेन शंकरः । चकार चन्द्रं निष्पापं ब्रह्मणा सहितः शुचिम् ॥४६॥
योगेन चन्द्रं योगीन्द्रो द्विखण्डं तं चकार सः । ररक्षार्धं ललाटे च सोऽप्यर्धं ब्रह्मणः पुरः ॥४७॥
अत एव महादेवो बभूव चन्द्रशेखरः । मृगाङ्को लज्जितस्तत्र कलङ्की देवसंसदि ॥४८॥
लज्जया च स्वयोगेन देहत्यागं चकार सः । तच्छरीरं च क्षीरोदे ब्रह्मणा च समर्पितम् ॥४९॥
रुरोदात्रिश्च कृपया शुचा क्षीरोदधेस्तटे । अत्रेश्चक्षुर्जलं तस्य पपात च जले व्रज ॥
तस्माद्बभूव चन्द्रश्च निष्पापो देवसंसदि ॥५०॥
ब्रह्मा च भगवाञ्छंभुरभिषेकं चकार तम् । उवाच तं महादेवो निर्भयं देवसंसदि ॥५१॥
महादेव उवाच ॥
स्वस्थानं गच्छ पुत्र त्वं कुरुष्व विषयं मुदा । पश्चात्तस्याश्च शापेन यक्ष्मग्रस्तो भविष्यसि ॥५२॥
व्यर्थं पतिव्रताशापं कर्तुमीशश्चको भुवि । मदाशिषा यक्ष्मणश्च प्रतीकारो भविष्यति ॥५३॥
यस्माद्भाद्रचतुर्थ्यां तु गुरुपत्नीक्षतिः कृता । तस्मात्तस्मिन्दिने वत्स पापदृश्यो युगे युगे ॥५४॥
नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥५५॥
देहत्यागेन हे वत्स कर्मभोगो न नश्यति । प्रायश्चित्तान्न संदेहो ह्यस्तमेव भविष्यति ॥५६॥
तारापहरणाद्वत्स कलङ्कश्चन्द्रमण्डले । मृगाकृतिर्विलग्नश्च भविष्यति युगे युगे ॥५७॥
शृणु वाक्यमिहाऽऽगच्छ तारके च पतिव्रते । सत्यं ब्रूहि कस्य गर्भं त्यक्त्वा शुद्धाभव प्रिये ॥५८॥
अकामतो बलात्साध्वी न स्त्री जारेण दुष्यति । कामतो नरकं याति यावच्चन्द्रदिवाकरौ ॥५९॥
उवाच तारा ब्रह्माणं गर्भं चन्द्रस्य सस्मितम् । जहसुर्देवताः सर्वाः शंभुश्च मुनिसङ्घकाः ॥६०॥
ददौ तारां च गुरवे लज्जिताय व्रजेश्वर । बृहस्पतिर्ययौ गेहं गृहीत्वा च पतिव्रताम् ॥६१॥
तया प्रसूतं पुत्रं च सुन्दरं कनकप्रभम् । गृहीत्वाप्रययौ चन्द्रौनमस्कृत्य विधिं शिवाम् ॥६२॥
ययुर्देवाश्च मुनयः शंभुश्च कमलोद्भवः । प्रययौ स्वगृहं शुक्रौ दैत्ययुक्तौ मुदाऽन्वितः ॥६३॥
एतत्ते कथितं नन्द ह्याख्यानं पुण्यदं शुभम् । एतच्छ्रुत्वा तु निष्पापो निष्कलङ्की नरो भवेत् ॥६४॥
धन्यं यशस्यमायुष्यं सर्वसंपत्करं परम् । शोकापनोदनं हर्षकरं सर्वत्र मङ्गलम् ॥६५॥
त्यज शोकं सदा नन्द गृहं व्रज व्रजेश्वर । ब्रूहि सर्वं यशोदां च मत्प्रसूं गोपिकागणम् ॥६६॥
बोधयिष्यसि सर्वां तां स्त्रीजातिं शोकसंयुताम् । सदीयज्ञानदत्तेन हर्षयुक्तः सदा भव ॥६७॥

इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे उत्तरार्धे नारायणनारदसंवादे ताराहरणं नामैकाशीतितमोऽध्यायः ॥८१॥

आदितः श्लोकानां समष्ट्यङ्काः-१७,२४१+६७=१७,३०८

## ॥ अथ द्व्यशीतितमोऽध्यायः ॥

नन्द उवाच॥

श्रुतं सर्वं महाभाग दुःस्वप्नं कथय प्रभो । उवाच तं वै भगवाञ्छ्रूयतामिति तद्वचः ॥१॥

श्रीभगवानुवाच॥

स्वप्ने हसति यो हर्षाद्विवाहं यदि पश्यति । नर्तनं गीतमिष्टं च विपत्तिस्तस्य निश्चितम्॥२॥
दन्ता यस्य विबीडयन्ते विचरन्तं च पश्यति । धनहानिर्भवेत्तस्य पीडा चापि शरीरजा ॥३॥
अम्यङ्गितस्तु तैलेन यो गच्छेद्दक्षिणां दिशम् । खरोष्ट्रमहिषारूढो मृत्युस्तस्य न संशयः ॥४॥
स्वप्ने कर्णे जपापुष्पमशोकं करवीरकम् । विपत्तिस्तस्य तैलं च लवणं यदि पश्यति ॥५॥
नग्नां कृष्णां छिन्ननासां शूद्रस्य विधवां तथा । कपर्दकं तालफलं दृष्ट्वा शोकमवाप्नुयात्॥६॥
स्वप्ने रुष्टं ब्राह्मणं च ब्राह्मणीं कोपसंयुताम् । विपत्तिश्च भवेत्तस्य लक्ष्मीर्याति गृहाद्ध्रुवम्॥७॥
वनपुष्पं रक्तपुष्पं पलाशं च सुपुष्पितम् । कार्पासं शुक्लवस्त्रं च दृष्ट्वा दुःखमवाप्नुयात्॥८॥
गायन्तीं च हसन्तीं च कृष्णाम्बरधरां स्त्रियम् । दृष्ट्वा कृष्णां च विधवां नरो मृत्युमवाप्नुयात् ॥९॥
देवता यत्र नृत्यन्ति गायन्ति च हसन्ति च । आस्फोटयन्ति धावन्ति तस्य देहो मरिष्यति ॥१०॥
वान्तं मूत्रं पुरीषं च वैद्यं रौप्यं सुवर्णकम् । प्रत्यक्षमथवा स्वप्ने जीवितं दशमावधि ॥११॥
कृष्णाम्बरधरां नारीं कृष्णमाल्यानुलेपनाम् । उपगूहति यः स्वप्ने तस्य मृत्युर्भविष्यति ॥१२॥
मृतवत्सं च मुण्डं च मृगस्य च नरस्य च । यः प्राप्तोत्यस्थिमालां च विपत्तिस्तस्य निश्चितम्॥१३॥
रथं खरोष्ट्रसंयुक्तमेकाकी योऽधिरोहयेत् । तत्रस्थोऽपि च जागर्ति मृत्युरेव न संशयः ॥१४॥
अम्यङ्गिस्तु हविषा क्षीरेण मधुनाऽपि च । तक्रेणापि गुडेनैव पीडा तस्य विनिश्चितम्॥१५॥
रक्ताम्बरधरां नारीं रक्तमाल्यानुलेपनाम् । उपगूहति यः स्वप्ने तस्य व्याधिर्विनिश्चितम्॥१६॥
पतितान्नखकेशांश्च निर्वाणाङ्गारमेव च । भस्मपूर्णां चितां दृष्ट्वा लभते मृत्युमेव च ॥१७॥
श्मशानं शुष्ककाष्ठं च तृणानि लोहमेव च । शमीं च किं चित्कृष्णाश्वं दृष्ट्वा दुःखं लभेद्ध्रुवम्॥१८॥
पादुकां फलकं रक्तं पुष्पमाल्यं भयानकम् । माषं मसूरं मुद्गं वा दृष्ट्वा सद्यो व्रणं लभेत्॥१९॥
कटकं सरठं काकं भल्लूकं वानरं गवम् । पूयं गात्रमलं स्वप्ने केवलं व्याधिकारणम्॥२०॥
भग्नभाण्डं क्षतं शूद्रं गलत्कुष्ठं च रोगिणम् । रक्ताम्बरं च जटिलं सूकरं महिषं खरम्॥२१॥
अन्धकारं महाघोरं मृतं जीवं भयंकरम् । दृष्ट्वा स्वप्ने योनिलिङ्ग विपत्तिं लभते ध्रुवम्॥२२॥
कुवेषरुपं म्लेच्छं च यमदूतं भयंकरम् । पाशहस्तं पाशशस्त्रं दृष्ट्वा मृत्युं लभेन्नरः ॥२३॥
ब्रह्मणो ब्राह्मणी बाला बालको वा सुतः सुता । विलापं कुरुते कोपाद्दृष्ट्वा दुःखमवाप्नुयात्॥२४॥
कृष्णं पुष्पं च तन्माल्यं सस्यं शस्त्रास्त्रधारिणम् । म्लेच्छां च विकृताकारं दृष्ट्वा मृत्युंलभेद्ध्रुवम्॥२५॥
त्यक्तप्राणं मृतं दृष्ट्वा मृत्युं च लभते ध्रुवम् । मत्स्यादि धारयेद्यो हि तद्भ्रातुर्मरणं ध्रुवम्॥२६॥
वाद्यं च नर्तनं गीतं गायनं रक्तवाससम् । मृदङ्गवाद्यमानं तं दृष्ट्वा दुःखं लभेद्ध्रुवम् ॥२७॥
छिन्नं वाऽपि कबन्धं वा विकृतं मुक्तकेशिनम् । क्षिपं नृत्यं च कुर्वन्तं दृष्ट्वा मृत्युं लभेन्नरः ॥२८॥
मृतो वाऽपि मृता वाऽपि कृष्णा म्लेच्छा भयानका । उपगूहति यं स्वप्ने तस्य मृत्युर्विनिश्चितम्॥२९॥
येषां दन्ताश्च भग्नाश्च केशाश्चापि पतन्ति हि । धनहानिर्भवेत्तस्य पीडा वा तच्छरीरजा ॥३०॥
उपद्रवन्ति यं स्वप्ने श्रृङ्गिणो दंष्ट्रिणोऽपि वा । बालका मानवाश्चैव तस्य राजकुलाद्भयम्॥३१॥
छिन्नवृक्षं पतन्तं च शिलावृष्टिं तुषं क्षुरम् । रक्ताङ्गारं भस्मवृष्टिं दृष्ट्वा दुःखमावाप्नुयात्॥३२॥
गृहं पतन्तं शैलं वा धूमकेतुं भयानकम् । भग्नस्कन्धं तरोर्वाऽपि दृष्ट्वा दुःखमवाप्नुयात्॥३३॥
रथगेहशैलवृक्षगोहस्तितुरगाम्बरात् । भूमौ पतति यः स्वप्ने विपत्तिस्तस्य निश्चितम्॥३४॥
उच्चैः पतन्ति गर्तेषु भस्माङ्गारयुतेषु च । क्षारकुण्डेषु चूर्णेषु मृत्युस्तेषां न संशयः ॥३५॥
बलाद्गृह्णाति दुष्टश्च छत्रं च यस्य मस्तकात् । पितुर्नाशो भवेत्तस्य गुरोर्वाऽपि नृपस्य वा ॥३६॥
सुरभिर्यस्य गेहाच्च याति त्रस्ता सवत्सिका । प्रयाति पापिनस्तस्य लक्ष्मीरपि वसुंधरा ॥३७॥
पाशेन कृत्वा बद्धं च यं गृहीत्वा प्रयान्ति च । यमदूताश्च ये म्लेच्छास्तस्य मृत्युर्विनिश्चितम्॥३८॥
गणको ब्राह्मणो वाऽपि ब्राह्मणी वा गुरुस्तथा । परिरुष्टः शपति यं विपत्तिस्तस्य निश्चितम्॥३९॥
विरोधिनश्च काकाश्च कुक्कुटा भल्लुकास्तथा । पतन्त्यागत्य यद्गात्रे तस्य मृत्युर्न संशयः ॥४०॥
महिषा भल्लुका उष्ट्रा सूकरा गर्दभास्तथा । रुष्टा धावन्ति यं स्वप्ने स रोगी निश्चितं भवेत्॥४१॥
रक्तचन्दनकाष्ठानि घृताक्तानि जुहोति यः । गायत्र्याश्च महस्रेण तेन शान्तिर्विधीयते ॥४२॥
सहस्रधा जपेद्यो हि भक्त्यैनं मधुसूदनम् । निष्पाणो हि भवेत्सोऽपि दुःस्वप्नः सुस्वप्नो भवेत्॥४३॥
अच्युतं केशवं विष्णुं हरिं सत्यं जनार्दनम् । हंसं नारायणं चैव ह्येतन्नामाष्टकं शुभम्॥४४॥
शुचिः पूर्वमुखः प्राज्ञो दशकृत्वश्च यो जपेत् । निष्पापोऽपि भवेत्सोऽपि दुःस्वप्नः शुभवान्भवेत् ॥४५॥

विष्णुं नारायणं कृष्णं माधवं मधुसूदनम् । हरिं नरहरिं रामं गोविन्दं दधिवामनम् ॥४६॥
भक्त्या चेमानि नामानि दश भद्राणि यो जपेत् । शतकृत्यो भक्तियुक्तो जप्त्वा नीरोगतां व्रजेत् ॥४७॥
लक्षधा हि जपेद्यो हि बन्धनान्मुच्यते ध्रुवम् । जप्त्वा च दशलक्षं च महावन्ध्या प्रसूयते ॥४८॥
हविष्याशी यतः शुद्धो दरिद्रो धनवान्भवेत् । शतलक्षं च जप्त्वा च जीवन्मुक्तो भवेन्नरः ॥४९॥
ॐ नमः शिवं दुर्गां गणपतिं कार्तिकेयं दिनेश्वरम् । धर्मं गङ्गां च तुलसीं राधां लक्ष्मीं सरस्वतीम् ॥५०॥
नामान्येतानि भद्राणि जले स्नात्वा च यो जपेत् । वाञ्छितं च लभेत्सोऽपि दुःस्वप्नः शुभवान्भवेत् ॥५१॥
ॐ ह्रीं श्रीं क्लीं पूर्वदूर्गतिनाशिन्यै महामायायै स्वाहा । कल्पवृक्षो हि लोकानां मन्त्रः सप्तदशाक्षरः ॥५२॥
शुचिश्च दशधा जप्त्वा दुःस्वप्नः सुखवान्भवेत् । शतलक्षजपेनैव मन्त्रसिद्धिर्भवेन्नृणाम् ॥५३॥
सिद्धमन्त्रस्तु लभते सर्वसिद्धिं च वाञ्छितम् । ॐ नमो मृत्युञ्जयायेति स्वाहान्तं लक्षधा जपेत् ॥५४॥
दृष्ट्वा च मरणं स्वप्ने शतायुश्च भवेन्नरः । पूर्वोत्तरमुखो भूत्वा स्वप्नं प्राज्ञे प्रकाशयेत् ॥५५॥
काश्यपे दुर्गते नीचे देवब्राह्मणनिन्दके । मूर्खे चैवानभिज्ञे च न च स्वप्नं प्रकाशयेत् ॥५६॥
अश्वत्थे गणके विप्रे पितृदेवासनेषु च । आर्ये च वैष्णवे मित्रे दिवा स्वप्नं प्रकाशयेत् ॥५७॥
इति ते पुण्यमाख्यातं कथितं पापनाशनम् । धन्यं यशस्यमायुष्यं किं भूयः श्रोतुमिच्छसि ॥५८॥

इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे उत्तरार्धे नारायणनारदसंवादे भगवन्नन्दसंवादे द्व्यशीतितमोऽध्यायः ॥८२॥

आदितः श्लोकानां समष्ट्यङ्काः-१७,३०८+५८=१७,३६६



## ॥ अथ त्र्यशीतितमोऽध्यायः ॥

नन्द उवाच ॥

वेदानां कारणं त्वं च ब्रह्मादीनां च पुत्रक । सर्वं कथय भद्रं ते कं पृच्छामि त्वया विना ॥१॥
विप्राणां यो हि धर्मश्च क्षत्रविट् शूद्रकर्मणाम् । संन्यासिनां च यो धर्मो यतीनां ब्रह्मचारिणाम् ॥२॥
विप्राणां विधवास्त्रीणां वैष्णवानां सतामपि । पतिव्रतानां स्त्रीणां च तत्सर्वं वक्तुमर्हसि ॥३॥
गृहिणां गृहिणीनां च शिष्याणां च विशेषतः । पुत्राणां चापि कन्यानां पितरं मातरं प्रति ॥४॥
स्त्रीजातिश्च कतिविधा भक्तः कतिविधः प्रभो । ब्रह्माण्डं च कतिविधं वदनं च किमात्मकम् ॥५॥
किं नित्यं कृत्रिमं किं च ब्रूहि सर्वं क्रमेण च ।

श्रीभगवानुवाच ॥

संध्यापूतः सदा विप्रः कुरुते मम सेवनम् ॥६॥
नित्यं भुङ्क्ते मत्प्रसादमनिवेद्य कदाचन । अन्नं विष्ठा जलं मूत्रं यद्विष्णोरनिवेदितम् ॥७॥
विष्णुप्रसादभोजी च जीवन्मुक्तश्च ब्राह्मणः । नित्यं तपस्यानिरतः शुचिः शान्तश्च शास्त्रवित् ॥८॥
व्रततीर्थाश्रितो धर्मी नानाध्यापनसंयुतः । विष्णुमन्त्रं गृहीत्वा च कृत्वा च गुरुसेवनम् ॥९॥
गृहीत्वा तदनुज्ञां च पश्चाद्भवति संगृही । दक्षिणां नित्यपूजानां गुरवे च निवेदयेत् ॥१०॥
गुरूणां पोषणं नित्यं कर्तव्यं नात्र संशयः । सर्वेषामपि वन्द्यानां पिता चैव महान् गुरुः ॥११॥
पितुः शतगुणैर्माता मातुः शतगुणैः सुरः । मन्त्रदस्तन्त्रदश्चैव सुराणां च चतुर्गुणः ॥१२॥
नारायणाश्च भगवान्गुरुः प्रत्यक्ष ईश्वरः । उद्देशे दीयते तस्मै सुरायेति श्रुतौ श्रुतम् ॥१३॥
प्रत्यक्षभोक्ता स्वगुरुः स्वयं देही जनार्दनः । गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुरेव स्वयं शिवः ॥१४॥
गुरौ च सर्वदेवाश्च तिष्ठन्ति सततं मुदा । गुरौ तुष्टे हरिस्तुष्टो यस्मिंस्तुष्टे च देवताः ॥१५॥
गुरुः पुत्रसमं स्नेहं शिष्येषु न करिष्यति । लभते ब्रह्महत्यां च भुङ्क्ते कृत्वा च नाऽऽशिषम् ॥१६॥
स्वधर्मनिरतो विप्रो ब्राह्मणश्च सदा शुचिः । विष्णुसेवी सदा विप्रस्तदन्योऽप्यशुचिः सदा ॥१७॥
ब्राह्मणो वृषवाहश्च शूद्राणां सूपकारकः । ब्राह्मणो देवलश्चैव संध्याहीनश्च दुर्बलः ॥१८॥
ब्राह्मणश्च दिवाशायी शूद्रश्राद्धान्नभोजनः । शूद्राणां शवदाही च ते च शूद्रसमा द्विजाः ॥१९॥
शालग्राममहामन्त्रं कृत्वा पूजां विधानतः । भुङ्क्ते नैवेद्यशेषं च तत्पादोदकमेव च ॥२०॥
हरेः पादोदकं पीत्वा तीर्थस्नायी भवेन्नरः । मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥२१॥
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः । शालग्रामशिलातोयैर्योऽभिषेकं समाचरेत् ॥२२॥
गङ्गाजलाद्दशगुणं शालग्रामजलं व्रज । नित्यं भुङ्क्ते च यो विप्रो जीवन्मुक्तः सुरैः समः ॥२३॥
विप्राणां नित्यकृत्यं च विष्णोर्नैवेद्यभोजनम् । यत्नेन पूजनं तस्य तत्पादोदकसेवनम् ॥२४॥
नित्यं त्रिसन्ध्यं कुरुते भक्त्या च मम पूजनम् ॥२४॥
एकादश्यां न भुङ्क्ते च मम वै जन्मवासरे ॥२५॥

शिवरात्रौ च हे तात श्रीरामनवमीदिने । न च भुङ्क्ते व्रती यो हि जीवन्मुक्तो हि स द्विजः ॥२६॥
पृथिव्यां यानि तीर्थानि तस्य पादे च तानि च । विप्रपादोदकं पीत्वा तीर्थस्नायी भवेन्नरः ॥२७॥
विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी । तावत्पुष्करपात्रेषु पिवन्ति पितरो जलम् ॥२८॥
विष्णुप्रसादभोजी च पवित्रां कुरुते महीम् । तीर्थानि च नरांश्चैव जीवन्मुक्तो हि स द्विजः ॥२९॥
सर्वतीर्थेषु स स्नातो व्रतानां च फलं लभेत् । पदे पदेऽश्वमेधस्य लभते निश्चितं फलम् ॥३०॥
वह्निवायुसमः पूतस्तेजसा भास्करोपमः । यमदूतं यमं चैव स च स्वप्ने न पश्यति ॥३१॥
वैकुण्ठे मोदते सोऽपि पार्षदो हरिणा सह । न भवेत्तस्य पातो हि विप्रस्य हरिसेविनः ॥३२॥
विष्णुमन्त्रोपासकश्च स एव वैष्णवो द्विजः । ब्राह्मणो वैष्णवः प्राज्ञो न हि तस्मात्परः पुमान् ॥३३॥
वेदोक्तो वा पुराणोक्तस्तन्त्रोक्तो वा मुनिः शुचिः । विचारतो गृहीत्वा तं शैवः शाक्तश्च वैष्णवः ॥३४॥
गुरुवक्त्राद्विष्णुमन्त्रोयस्य कर्णे विशत्ययम् । तं वैष्णवं महापूतं प्रवदन्ति मनीषिणः ॥३५॥
मन्त्रग्रहणमात्रेण जीवन्मुक्तो भवेन्नरः । भीत्त्वा ब्रह्मण्डमखिलं यास्यत्येव हरेः पदम् ॥३६॥
पूर्वान्सप्त परान्सप्त सप्त मातामहादिकान् । सोदरानुद्धरेद्भक्तस्तत्प्रसूं तत्प्रसूं तथा ॥३७॥
जपेन्नारायणक्षेत्रे पुरश्चरणपूर्वकम् । पुरुषाणां सहस्रं च लीलयाऽत्मानमुद्धरेत् ॥३८॥
मन्त्रग्रहणमात्रेण फलमेतद्व्रजेश्वर । पुरश्चरणसंपर्कात्पुरुषाणां शतं शतम् ॥३९॥
एकान्तिको वैष्णवश्च पुंसां लक्षं समुद्धरेत् । क्रिया विष्णुपदे यस्य सङ्कल्पाश्च बहिष्कृता ॥४०॥
द्विजाः सुरा मम प्राणा भक्तः प्राणत्परः प्रियः । विश्वेषु प्रियपात्रेषु न मे भक्तात्परः प्रियः ॥४१॥
तेजीयांसं गुरुं दृष्ट्वा सर्वत्र रक्षितुं क्षमम् । करोति मन्त्रग्रहणं तस्माद्भूयाद्विचक्षणः ॥४२॥
वयोहीनाज्ज्ञानहीनाद्विद्याहीनात्तथैव च । जातिहीनाद्गुरोर्मन्त्रं गृह्णीयान्न कदाचन ॥४३॥
शास्त्रार्थं क्षतं मन्त्रं न गृह्णीयात्कदाचन । मूर्खादाश्रमहीनाच्च पितुः संन्यासिनस्तथा ॥४४॥
रोगिणो वंशहीनाच्च भार्याहीनात्तथैव च । मन्त्रक्षिप्तात्तथा मन्त्रं न गृह्णीयात्कदाचन ॥४५॥
विष्णुमन्त्रं न गृह्णीयाद्विष्णुभक्ति विहीनतः । न च शैवान्न शाक्ताच्च गृह्णीयाद्वैष्णवाद्द्विजात् ॥४६॥
वयोहीनात्तथाऽल्पायुर्ज्ञानहीनादपण्डितः । विद्याहीनाद्भवेन्मूढो जातिहीनात्क्षयो भवेत् ॥४७॥
मूर्खान्मूर्खो भवेत्सद्यो दुःखी स्वाश्रमहीनतः । यशोहानिः पितुश्चैव मृत्युः संन्यासिनस्तथा ॥४८॥
रोगिणो व्याधियुक्तश्च निर्वंशो वंशहीनतः । भार्याहीनोऽपि स्त्रीहीनान्मन्त्रक्षिप्तात्तु तत्समः ॥४९॥
विष्णुभक्तिविहीनाच्च भक्तिहीनो भवेन्नरः । शैवाच्छाक्ताद्गृहीत्वा च हरौ भक्तिर्न वर्द्धते ॥५०॥
ब्राह्मणो वैष्णवः शुद्धः पक्वान्नं दातुमीश्वरः । पक्वान्नं हरये दातुमक्षमश्चेतरो जनः ॥५१॥
ओंकारोच्चारणाद्धोमाच्छालग्रामशिलार्चनात् । मह्यं पक्वानन्दानाच्च विप्रादन्यो व्रजेदधः ॥५२॥
उदासीनाद्दूराचारान्न गृह्णीयान्मनुं सुधीः । दैवाद्यदि च गृह्णीयाद्धनहीनो भवेद्ध्रुवम् ॥५३॥
ब्राह्मणानां सदा भक्ष्यं हविष्यं च निरामिषम् । आमिषस्य परित्यागात्सूर्यवत्तेजसा भवेत् ॥५४॥
नित्यं नूतनभाण्डेन कर्तव्यः पाक एव च । अथवा पक्षपर्यन्तं ततस्त्याज्यं मनीषिभिः ॥५५॥
स्थानं सुसंस्कृतं कृत्वा पाकं निर्वृत्य पूजकः । स्थाने परिष्कृते विप्रो दत्त्वा मह्यं च भक्तितः ॥५६॥
तदा निवेद्य भुङ्क्ते च दत्त्वा विप्राय सादरम् । अनिवेद्य च भुक्त्वा च सुरापीतिर्भवेद्द्विजः ॥५७॥
चन्द्रसूर्योपरागे वै वाऽऽशौचे मृतजातयोः । स्पृष्टेनाशुचिना सद्यः पाकभाण्डं परित्यजेत् ॥५८॥
भ्रष्टद्रव्यं तथाऽन्नं च धृत्वा धौते च वाससी । पादप्रक्षालनं कृत्वा भुङ्क्ते स्थानो परिष्कृते ॥५९॥
द्विर्भोजनं न कर्तव्यं स्थिते सूर्ये द्विजातिभिः । निष्फलं तद्भवेत्कर्म भुक्त्वा च नरकं व्रजेत् ॥६०॥
यात्रां युद्धं नदीतीरं पुनर्भोजनमैथुने । वर्जयेच्छ्राद्धदिवसे हविष्याशी च संयमी ॥६१॥
द्विजाय विष्णुभक्ताय पात्रं दद्याद्बुधाय च । वृषलीपतये चैव न दद्याच्छूद्रयाजिने ॥६२॥
संध्याहीनाय दुष्टाय वृषवाहाय यत्नतः । शुक्रविक्रयिणे चैव देवलाय कदाचन ॥६३॥
प्रदत्तं पात्रमेतेभ्यो ब्राह्मणं नरकं नयेत् । पात्रं भुक्त्वा तद्दिवसे मैथुनान्नरकं व्रजेत् ॥६४॥
सर्वेभ्यः पातकी तात कन्याविक्रयकारकः । मूल्यं गृहीत्वा यो दद्यात्स महारौरवं व्रजेत् ॥६५॥
कन्यालोमप्रमाणान्तं वर्षं च पितृभिः सह । कुम्भीपाके पच्यते च पुत्रश्चापि पुरोहितः ॥६६॥
तस्मात्कन्यां सुपात्राय दानं कुर्याद्विचक्षणः । शूद्रवद्ब्राह्मणेभ्यश्च नैव तद्वंशजाय च ॥६७॥
विप्रवैष्णवयोर्धर्मः कथितश्च व्रजेश्वरः । यदुक्तं च पुराणैश्च चतुर्भिः श्रुतिभिस्तथा ॥६८॥
द्विजार्चनं क्षत्रियाणां तथा नारायणार्चनम् । राज्यानां पालनं चैव रणे निर्भयता तथा ॥६९॥
नित्यं दानं ब्राह्मणेभ्यः शरणागतरक्षणम् । पुत्रतुल्यं प्रजानां च दुःखिनां परिपालनम् ॥७०॥
शास्त्रास्त्राणां च नैपुण्यं रणे शौण्डीर्यमेव च । तपश्च धर्मकृत्यं च यत्नतः कुरुते सदा ॥७१॥
पण्डितं नीतिशास्त्रज्ञं नित्यं च परिपालयेत् । नियोजयेत्सभामध्ये नित्यं सद्भिश्च संयुते ॥७२॥
हस्त्यश्वरथपादातं सेनाङ्गं च चतुष्टयम् । पालयेद्यत्नतो नित्यं यशस्वी च प्रतापवान् ॥७३॥

रणे निमन्त्रितश्चैव दाने न विमुखो भवेत् । रणे वा यस्त्यजेत्प्राणांस्तस्य स्वर्गो यशस्करः ॥७४॥
वैश्यानामपि वाणिज्यमीश्वरः कृषिपालने । विप्रदेवार्चनं दानं तपस्या व्रतसेवनम् ॥७५॥
विप्राणामर्चनं नित्यं शूद्रधर्मो विधीयते । तत्कृषी तद्धनग्राही शूद्रश्चाण्डालतां व्रजेत् ॥७६॥
गृध्रः कोटिसहस्राणि शतजन्मानि सूकरः । श्वापदः शतजन्मानि शूद्रो विप्रधनापहः ॥७७॥
यः शूद्रो ब्राह्मणीगामी मातृगामी स पातकी । कुम्भीपाके पच्यते स यावद्वै ब्रह्मणः शतम् ॥७८॥
कुम्भीपाके तप्ततैले भुक्तः सर्पैरहर्निशम् । शब्दं च विकृताकारं कुरुते यमताडनात् ॥७९॥
ततश्चाण्डालयोनिः स्यात्सप्तजन्मसु पातकी । सप्तजन्मसु सर्पश्च जलौकाः सप्तजन्मसु ॥८०॥
जन्मकोटिसहस्रं च विष्ठायां जायते कृमिः । पुंश्चलीनां योनिकृमिः स भवेत्सप्तजन्मसु ॥८१॥
गवां व्रणकृमिः स्याच्च पातकी सप्तजन्मसु । योनौ योनौ भ्रमत्येवं न पुनर्जायते नरः ॥८२॥
संन्यासिनां च यो धर्मो मन्मुखाच्च निशामय । दण्डग्रहणमात्रेण नरो नारायणो भवेत् ॥८३॥
पूर्वकर्माणि दग्ध्वा च परकर्मनिकृन्तनम् । कुरुते चिन्तयेन्मां च ह्यायाति मम मन्दिरम् ॥८४॥
संन्यासिनां पदस्पर्शात्सद्यः पूता वसुंधरा । सद्यः पुनन्ति तीर्थानि वैष्णवस्य यथा व्रज ॥८५॥
संन्यासिनश्च स्पर्शेन निष्पापो जायते नरः । संन्यासिनं भोजयित्वा चाश्वमेधफलं लभेत् ॥८६॥
नत्वा च कामतो दृष्ट्वा राजसूयफलं लभेत् । फलं संन्यासिनां तुन्यं यतीनां ब्रह्मचारिणाम् ॥८७॥
संन्याची याति सायाह्ने क्षुधितो गृहिणां गृहम् । सदन्नं वा कदन्नं वा तद्दत्तं नैव वर्जयेत् ॥८८॥
न याचते च मिष्टान्नं न कुर्यात्कोपमेव च । न धनग्रहणं कुर्यादिकवासा निरीहतः ॥८९॥
शीतग्रीष्मसमानश्च लोभमोहविवर्जितः । तत्र स्थित्वैकरात्रं च प्रातरन्यत्स्थलं व्रजेत् ॥९०॥
यानमानोहणं कृत्वा गृहीत्वा गृहिणो धनम् । गृहं कृत्वा गृही रम्यात्स्वधर्मात्पतितो भवेत् ॥९१॥
कृत्वा च कृषिवाणिज्यं कुवृत्तिं कुरुते च यः । स संन्यासी हृताचारः स्वधर्मात्वतितो भवेत् ॥९२॥
अशुभं च शुभं वाऽपि स्वकर्म कुरुते यदि । बहिष्कृतः स्वधर्मो वाऽप्युपहास्यश्च वै भवेत् ॥९३॥
ब्राह्मणी पतिहीना या भवेन्निष्कामिनी सदा । एकभुक्ता दिनान्ते सा हविष्यान्नरता सदा ॥९४॥
न धत्ते दिव्यवस्त्रं च गन्धद्रव्यं सुतैलकम् । स्रजं च चन्दनं चैव शङ्खसिन्दूरभूषणम् ॥९५॥
त्यक्त्वा मलिनवस्त्रा स्यान्नित्यं नारायणं स्मरेत् । नारायणस्य सेवां च कुरुते नित्यमेव च ॥९६॥
तन्नामोच्चारणं शश्वत्कुरुते नान्यभक्तितः । पुत्रतुल्यं च पुरुषं सदा पश्यति धर्मतः ॥९७॥
मिष्टान्नं न च भुङ्क्ते सा न कुर्याद्विभवं व्रज । एकादश्यां न भोक्तव्यं कृष्णजन्माष्टमीदिने ॥९८॥
श्रीरामस्य नवम्यां तु शिवरात्रौ पवित्रया । अघोरायां च प्रेतायां चन्द्रसूर्योपरागयोः ॥९९॥
भ्रष्टं द्रव्यं परित्यज्य भुज्यते परमेव च । ताम्बूलं विधवास्त्रीणां यतीनां ब्रह्मचारिणाम् ॥१००॥
संन्यासिनां च गोमांससुरातुल्यं श्रुतौ श्रुतम् । रक्तशाकं मसूरं च जम्बीरं पर्णमेव च ॥१०१॥
अलाबुर्वर्तुलाकारा वर्जनीया च तैरवि । पर्यङ्कशायिनी नारी विधवा पातयेत्पतिम् ॥१०२॥
यानमारोहणं कृत्वा विधवा नरकं व्रजेत् । न कुर्यात्केशसंस्कारं गात्रसंस्कारमेव च ॥१०३॥
केशवेणी जटारूपे तत्क्षौरं तीर्थकं विना । तैलाभ्यङ्गं न कुर्वीत नहि पश्यति दर्पणम् ॥१०४॥
मुखं च परपुंसां च यात्रां नृत्यं महोत्सवम् । नर्तनं गायनं चैव सुवेषं पुरुषं शुभम् ॥१०५॥
शृणुयाच्च सतां धर्मं सामवेदनिरूपितम् । परमार्थं परं चैव निबोध कथयामि ते ॥१०६॥
अध्यापनमध्ययनं शिष्याणां परिपालनम् । गुरुणां सेवनं नित्यं द्विचदेवार्चनं तथा ॥१०७॥
सिद्धान्तशास्त्रनैपुण्यं भावनं स्वात्मतोषणम् । व्याख्यानं परिशुद्धं च ग्रन्थाभ्यस्तं च संततम् ॥१०८॥
व्यवस्थापरिशुद्ध्यर्थं विचारो वेदसंमतः । शास्त्रार्थाचरणं चैव कर्तव्यं स्वयमेव च ॥१०९॥
देवाह्निकेषु नैपुण्यं वेदाचरणमीप्सितम् । वेदोक्तभक्षणं चैव पवित्राचरणं सदा ॥११०॥
पतिव्रतानां यं धर्मं तं निबोध व्रजेश्वर । नित्यं तु भर्तर्य्यौत्सुक्यात्तत्पादोदकमीप्सितम् ॥१११॥
भक्तिभावेन सततं भोक्तव्यं तदनुज्ञया । व्रतं तपस्यां देवार्चां परित्यज्य प्रयत्नतः ॥११२॥
कुर्याच्चरणसेवां च स्तवनं परितोषणम् । तदाज्ञारहितं कर्म न कुर्याद्वैरतः सती ॥११३॥
नारायणात्परं कान्तं ध्यायते सततं सती । परपुंसां मुखं चैव सुवेषपुरुषं परम् ॥११४॥
यात्रामहोत्सवं नृत्यं नर्तनं गायनं व्रज । परक्रीडां च सततं न हि पश्यति सुव्रता ॥११५॥
यद्भक्ष्यं स्वामिनो नित्यं तदेवमपि योषिताम् । नहि त्यजेत्तु तत्सङ्गं क्षणमेव च सुव्रता ॥११६॥
उत्तरे नोत्तरं दद्यात्स्वामिनश्च पतिव्रता । न कोपं कुरुते शुद्धा ताडिता चापि कोपतः ॥११७॥
क्षुधितं भोजयेत्कान्तं दद्यात्पानं च भोजनम् । न बोधयेत्तं निद्रालुं प्रेरयेन्नैव कर्मसु ॥११८॥
पुत्राणां च शतगुणं स्नेहं कुर्य्यात्पतौ सती । पतिर्बन्धुर्गतिर्भर्ता दैवतं कुलयोषितः ॥११९॥
शुभं दृष्ट्वा सुधातुल्यं कान्तं पश्यति सुन्दरी । सस्मितं वदनं कृत्वा भक्तिभावेन यत्नतः ॥१२०॥
पुरुषाणां सहस्रं च सती स्त्री च समुद्धरेत् । पतिः पतिव्रतानां च मुच्यते सर्वपातकात् ॥१२१॥

नास्ति तेषां कर्मभोगः सतीनां व्रततेजसाम् । तया सार्धं च निष्कर्मी मोदते हरिमन्दिरे ॥१२२॥
पृथिव्यां यानि तीर्थानि सतीपादेषु तान्यपि । तेजश्च सर्वदेवानां मुनीनां च सतीषु च ॥१२३॥
तपस्विनां तपः सर्वं व्रतिनां यत्फलं व्रज । दाने फलं यद्दातॄणां तत्सर्वं तासु संततम् ॥१२४॥
स्वयं नारायणः शंभुर्विधाता जगतामपि । सुराः सर्वे च मुनयो भीतास्ताभ्यां च संततम् ॥१२५॥
सतीनां पादरजसा सद्यः पूता वसुंधरा । पतिव्रतां नमस्कृत्वा मुच्यते पातकान्नरः ॥१२६॥
त्रैलोक्यं भस्मसात्कर्तुं क्षणेनैव पतिव्रता । स्वतेजसा समर्था सा महापुण्यवती सदा ॥१२७॥
सतीनां च पतिः साधुः पुत्रो निःशंक एव च । न हि तस्य भयं किंचिद्देवेभ्यश्च यमादपि ॥१२८॥
शतजन्मपुण्यवतां गेहे जाता पतिव्रता । पतिव्रताप्रसूः पूता जीवन्मुक्तः पिता तथा ॥१२९॥
सती स्त्री प्रातरुत्थाय त्यक्त्वा च रात्रिवाससम् । भर्तारं च नमस्कृत्य करोति स्तवनं मुदा ॥१३०॥
गृहकार्यं ततः कृत्वा स्नात्वा धौते च वाससी । गृहीत्वा शुक्लपुष्पं च भक्तितः पूजयेत्पतिम् ॥१३१॥
स्नापयित्वा सुपूतेन जलेन निर्मलेन च । तस्मै दत्त्वा धौतवस्त्रं तत्पादौ क्षालयेन्मुदा ॥१३२॥
आसने वासयित्वा च दत्त्वा भाले च चन्दनम् । सर्वाङ्गलेपनं कृत्वा दत्त्वा माल्यं गलेऽपि च ॥१३३॥
सामवेदोक्तमन्त्रेण भोगद्रव्यैः सुधोपमैः । संपूज्य भक्तितः कान्तं स्तुत्वा च प्रणमेन्मुदा ॥१३४॥
ॐ नमः कान्ताय शान्ताय सर्वदेवाश्रयाय स्वाहा । इत्यनेनैव मन्त्रेण दत्त्वा पुष्पं च चन्दनम् ॥१३५॥
पाद्यार्घ्यं धूपदीपौ च वस्त्रं नैवेद्यमुत्तमम् । जलं सुवासितं शुद्धं ताम्बूलं च सुवासितम् ॥१३६॥
दत्त्वा स्तोत्रं पठेद्यद्यत्कृतं वै पाठ्यमेव च । ॐ नमः कान्ताय भर्त्रे च शिरश्चन्द्रस्वरूपिणे ॥१३७॥
नमः शान्ताय दान्ताय सर्वदेवाश्रयाय च । नमो ब्रह्मस्वरूपाय सतीप्राणपराय च ॥१३८॥
नमस्याय च पूज्याय हृदाधाराय ते नमः । पञ्चप्राणाधिदेवाय चक्षुषस्तारकाय च ॥
ज्ञानाधाराय पत्नीनां परमानन्दरूपिणे ॥१३९॥
पतिर्ब्रह्मा पतिर्विष्णुः पतिरेव महेश्वरः । पतिश्च निर्गुणाधारो ब्रह्मरूप नमोऽस्तु ते ॥१४०॥
क्षमस्व भगवन् दोषं ज्ञानाज्ञानकृतं च यत् । पत्नीबन्धो दयासिन्धो दासीदोषं क्षमस्व मे ॥१४१॥
इदं स्तोत्रं महापुण्यं सृष्ट्यादौ पद्मया कृतम् । सरस्वत्या च धरया गङ्गया च पुरा व्रज ॥१४२॥
सावित्र्या च कृतं पूर्वं ब्रह्मणे चापि नित्यशः । पार्वत्या च कृतं भक्त्या कैलासे शंकराय च ॥१४३॥
मुनीनां च सुराणां च पत्नीभिश्च कृतं पुरा । पतिव्रतानां सर्वासां स्तोत्रमेतच्छुभावहम् ॥१४४॥
इदं स्तोत्रं महापुण्यं या श्रृणोति पतिव्रता । नरोऽन्यो वाऽपि नारी वा लभते सर्ववाञ्छितम् ॥१४५॥
अपुत्रो लभते पुत्रं निर्धनो लभते धनम् । रोगी च मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥१४६॥
पतिव्रता च स्तुत्वा च तीर्थस्नानफलं लभेत् । फलं च सर्वं तपसां व्रतानां च व्रजेश्वर ॥१४७॥
इदं स्तुत्वा नमस्कृत्वा भुङ्क्ते सा तदनुज्ञया । उक्तः पतिव्रताधर्मो गृहिणां श्रुयतां व्रज ॥१४८॥
इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखण्डे उत्तरार्धे नारायणनारदसंवादे भगवन्नन्दसंवादे त्र्यशीतितमोऽध्यायः ॥८३॥
आदितः श्लोकानां समष्ट्यङ्काः-१७,३६६+१४८=१७,५१४



## ॥ अथ चतुरशीतितमोऽध्यायः ॥

श्रीभगवानुवाच ॥
द्विजदेवार्चनं चैव करोति सततं गृही । स्वधर्माचरणं चैव चातुर्वर्ण्यं च नित्यशः ॥१॥
कुर्वन्ति गृहिणामाशां सर्वे देवादयस्तथा । अकृत्वाऽतिथिपूजां च गृहस्थश्च सदाऽशुचिः ॥२॥
पितरः कर्मकाले चातिथिकाले च देवताः । सर्वे गृहस्थमायान्ति निपानमिव धेनवः ॥३॥
समायाति प्रयत्नेन सायाह्ने क्षुधितोऽतिथिः । पूजां कृत्वाऽऽशिषं लब्ध्वा प्रयाति गृहिणो गृहात् ॥४॥
अकृत्वाऽतिथिपूजां च गृही भवति पातकी । त्रैलोक्यजनितं पापं लभते नात्र संशयः ॥५॥
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते । पितरस्तस्य देवाश्च वह्नयश्च तथैव च ॥६॥
निराशाः प्रतिगच्छन्ति गृहिणोऽतिथयो गृहात् । स्त्रीघ्नैर्गोघ्नैः कृतघ्नैश्च ब्राह्मणैर्गुरुतल्पगैः ॥७॥
तुल्यदोषो भवत्येव येनातिथिरनर्चितः । स्वात्मनः पातकं दत्त्वा पुण्यमादाय गच्छति ॥८॥
तस्मात्कृत्वा सर्वसेवां देवादींश्च शुभाशयः । पोष्याणां भरणं कृत्वा पश्चाद्भुङ्क्ते स धर्मवित् ॥९॥
यस्य माता गृहे नास्ति भार्या च पुंश्चली तथा । अरण्यं तेन गन्तव्यमरण्याद्दुःखदं गृहम् ॥१०॥
पतीं द्वेष्टि सदा दुष्टा विषतुल्यं च पश्यति । ददाति तस्मै नाऽऽहारं भर्त्सनं कुरुते सदा ॥११॥
पूजितं मुनितुल्यं च सा च पापीयसी परम् । संततं तृणवन्मत्वा न्यक्कारं कुरुते सदा ॥१२॥
दुर्वाक्यावह्निना दग्धो मृततुल्यश्च जीवति । यावज्जीवनपर्यन्तं संप्राप्य दुष्टवंशजाम् ॥१३॥
गृहिणीनां सदाचारं श्रूयतां तच्छ्रुतौ श्रुतम् । गृहिणी पतिभक्ता च देवब्राह्मणपूजिता ॥१४॥

सा शुद्धा प्रातरुत्थाय नमस्कृत्य पतिं सुरम् । प्राङ्गणे मङ्गलं दद्याद्गोमयेन जलेन च ॥१५॥
गृहकृत्यं च कृत्वा च स्नात्वाऽऽगत्य गृहं सती । सुरं विप्रं पतिं नत्वा पूजयेद्गृहदेवताम् ॥१६॥
गृहकृत्यं सुनिर्वृत्य भोजयित्वा पतिं सती । अतिथिं पूजयित्वा च स्वयं भुङ्क्ते सुखंसती ॥१७॥
पुत्रैश्च पूजितस्तातः शिष्यैश्च पूजितो गुरुः । आज्ञया कुरुते कर्म पुत्रः शिष्यश्च भृत्यवत् ॥१८॥
न प्रेरयेद्गुरुं तातं पुत्रः शिष्यश्च कर्मसु । पित्रे च गुरवे नित्यं सर्वस्वं च समर्पयेत् ॥१९॥
न कुर्यान्नरबुद्धिं च गुरौ पितरि संततम् । कृत्वा च नरबुद्धिं च ब्रह्महत्यां लभेद्ध्रुवम् ॥२०॥
मातरं पूजयेद्भक्त्या पितुश्चाप्यधिकां तथा । मातुः परं गुरुं चैव पूजयेद्भक्तियोगतः ॥२१॥
पिता माता गुरुर्भार्या शिष्यः पुत्रः सदाऽक्षमः । अनाथा भगिनी कन्या नित्यं पोष्या गुरुप्रिया ॥२२॥
एवं च कथितं तात सर्वेषां धर्ममुत्तमम् । स्त्रीजातिर्वास्तवी शुद्धा ताश्च सर्वाः पतिव्रताः ॥२३॥
सर्वा जातिरेकविधा चाऽऽदौ सृष्टा च ब्रह्मणा । ताः सर्वाः प्रकृतेरंशाः पवित्राः पण्डिताधिकाः ॥२४॥
केदारकन्याशापेन स हि धर्मः क्षयं गतः । तदा कोपेन धात्रा च कृत्या स्त्री च विनिर्मिता ॥२५॥
कृत्या स्त्री त्रिविधा जातिर्ब्रह्मणा निर्मिता पुरा । उत्तमा प्रथमा सा च मध्यमा चाधमा व्रज ॥२६॥
उत्तमा पतिभक्ता सा किंचिद्धर्मसमन्विता । प्राणान्तेऽपि न कुरुते तं जारमयशस्करम् ॥२७॥
पूजयेत्सा यथा कान्तं तथा देवद्विजातिथीन् । व्रतानि चोपवासांश्च कुरुते सर्वपूजनम् ॥२८॥
गुरुणा रक्षिता यत्नाज्जारं च न भजेद्भयात् । स कृत्रिमा मध्यमा च यथाकिंचित्पतिं भजेत् ॥२९॥
स्थानं नास्ति क्षणं नास्ति नास्ति प्रार्थयिता नरः । तेन हे नन्द तासां च सतीत्वमुपजायते ॥३०॥
अधमा परमा दुष्टाऽत्यन्ताऽसद्वंशजा तथा । अधर्मशीला दुःशीला दुर्मुखा कलहान्विता ॥३१॥
पतिं भर्त्सयते नित्यं जारं च सेवते सदा । दुःखं ददाति कान्ताय विषतुल्यं च पश्यति ॥३२॥
जारद्वारमुपायेन हन्ति कान्तं मनोहरम् । धर्मिष्ठं च वरिष्ठं च गरिष्ठं च महीतले ॥३३॥
कामदेवसमं चापि जारं पश्यति कामतः । शुभदृष्ट्या कटाक्षेण शंश्वत्पापीयसी मुदा ॥३४॥
सुवेषं पुरुषं दृष्ट्वा युवानं रतिशूकरम् । योनिः क्लिद्यति नारीणां कामिनीनां निरन्तरम् ॥३५॥
ददाति भर्त्रे नाऽऽहारं विषोक्तिं वक्ति संततम् । अधर्मं चिन्तयेच्छश्वज्जारं च परमं मुदा ॥३६॥
गुरुभिर्भर्त्सिता सा च रक्षिता च शतेन च । तथाऽपि जारं कुरुते नापि साध्या नृपेरपि ॥३७॥
नास्ति तस्याः प्रियं किंचित्सर्वं कार्यवशेन च । गावस्तृणमिवारण्ये प्रार्थयन्ती नवं नवम् ॥३८॥
विद्युदाभा जले रेखा तस्या प्रीतिस्तथैव च । अधर्मयुक्ता सततं कपटं वक्ति निश्चितम् ॥३९॥
व्रते तपसि धर्मे च न मनो गृहकर्मणि । न गुरौ न च देवेषु जारे स्निग्धं च चञ्चलम् ॥४०॥
स्त्रीजातित्रिविधानां च कथा च कथिता मया । भक्तानां त्रिविधानां च लक्षणं श्रूयतामिति ॥४१॥
तृणशय्यारतो भक्तो मन्नामगुणकीर्तिषु । मनो निवेशयेत्त्यक्त्वा संसारसुखकारणम् ॥४२॥
व्यायते मत्पदाब्जं च पूजयेद्भक्तिभावतः । अहैतुकीं तस्य देवाः संकल्परहितस्य च ॥४३॥
सर्वसिद्धिं न वाञ्छन्ति तेऽणिमादिकमीप्सितम् । ब्रह्मत्वममरत्वं वा सुरत्वं सुखकारणम् ॥४४॥
दास्यं विना नहीच्छन्ति सालोक्यादिचतुष्टयम् । नैव निर्वाणमुक्तिं च सुधापानमभीप्सितम् ॥४५॥
वाञ्छन्ति निश्चिलां भक्तिं मदीयामतुलामपि । स्त्रीपुंविभेदो नास्त्येव सर्वजीवेषु भिन्नता ॥४६॥
तेषां सिद्धेश्वराणां च प्रवराणां व्रजेश्वर । क्षुत्पिपासादिकं निद्रालोभमोहादिकं रिपुम् ॥४७॥
त्यक्त्वा दिवानिशं मां च ध्यायन्ते च दिगम्बराः । स मद्भक्तोत्तमो नन्द श्रूयतां मध्यमादिकम् ॥४८॥
नासक्तः कर्मसु गृही पूर्वप्राक्तनतः शुचिः । करोति सततं कर्म पूर्वनिकृन्तनम् ॥४९॥
न करोत्यपरं यत्नात्सङ्कल्परहितः स च । सर्वं कृष्णस्य यत्किञ्चिन्नाहं कर्ता च कर्मणः ॥५०॥
कर्मणा मनसा वाचा सततं चिन्तयेदिति । न्यूनभक्तश्च तन्न्यूनः स च प्राकृतिकः श्रुतौ ॥५१॥
यमं वा यमदूतं वा स्वप्नेऽपि न च पश्यति । पुरुषाणां सहस्रं च पूर्वभक्तः समुद्धरेत् ॥५२॥
पुंसां शतं मध्यमश्च तच्चतुर्थं च प्राकृतः । भक्तश्च त्रिविधस्तात कथितश्च तवाऽऽज्ञया ॥५३॥
ब्रह्माण्डरचनाख्यानं श्रूयतां सावधानतः । ब्रह्माण्डरचनार्थं च भक्ता जानन्ति यत्नतः ॥५४॥
मुनयश्च सुराः सन्तः किञ्चिज्जानन्ति दुःखतः । जानामि विश्वं सर्वार्थं ब्रह्माऽऽनन्तो महेश्वरः ॥५५॥
धर्मः सनत्कुमारश्च नरनारायणावृषी । कपिलश्च गणेशश्च दुर्गा लक्ष्मीः सरस्वती ॥५६॥
वेदाश्च वेदमाता च सर्वज्ञा राधिका स्वयम् । एते जानन्ति विश्वार्थं नान्यो जानाति कश्चन ॥५७॥
वैषम्यार्थं च सुधियः सर्वे विज्ञातुमक्षमाः । नित्याकाशो यथाऽऽत्मा च तथा नित्या दिशो दश ॥५८॥
यथा नित्या च प्रकृतिस्तथैव विश्वगोलकः । गोलोकश्च यथा नित्यस्तथा वैकुण्ठ एव च ॥५९॥
एकदा मयि गोलोके रासे नित्यं प्रकुर्वति । आविर्भूता च वामाङ्गाद्बाला षोढशवार्षिकी ॥६०॥
श्वेतचम्पकवर्णाभा शरच्चन्द्रसमप्रभा । अतीव सुन्दरी रामा रमणीनां परावरा ॥६१॥
ईषद्धास्यप्रसन्नास्या कोमलाङ्गी मनोहरा । वह्निशुद्धांशुकाधाना रत्नाभरणभूषिता ॥६२॥

